# सत्कर्मक्षेत्रनिर्णयः

## भारतमेवकर्मक्षेत्रम्



ತಾಮ್ರಪರ್ಣೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯ ಕೃತ

# ಸತ್ಕರ್ಮಕ್ಷೇತ್ರನಿರ್ಣಯಃ

॥ श्रीः ॥

॥ श्री हयवदन मध्वेश पाहि ॥

# भारतमेव कर्मक्षेत्रम्

श्रीपरमपूज्य पण्डितराज श्रीजालिहाळ श्रीनिवासाचार्याणां प्रियान्तेवासिना
श्रीताम्रपर्णि शेषगिरीशाचार्यसूनुना
पं. श्री ताम्रपर्णी श्रीनिवासाचार्येण विरचितः

# सत्कर्मक्षेत्रनिर्णयः

सम्पादकः
पं. श्रीकराचार्यः ताम्रपर्णी

प्रकाशनम्
श्रीसनातनधर्म संरक्षणा ट्रस्ट् (रि), बेङ्गळूरु
२००८

# SATKARMAKSHETRA NIRNAYAH

A collection of Pramanas in Smruthi Puranas related to foreign travel and sea - vouage. Also deals the Pramanas quoted by Sri Srimanmadhvacharya in Bhagavata Tatparyanirnaya.

**Author : Sri C.S. Srinivasacharya Tamraparni**

**First Edition : 2008**

**No.of copies : 1000**

**Price : Rs. 40**



**Published by :**
**Sanathana Dharma Samrakshna Trust (R)**
**No. 14/101, 22 Main, Janardhna Layout,**
**Padmanabhanagar, Bangalore - 560070**
**Ph: 9945224058**

**Coverpage Designed by : K.M. SHESHAGIRI**
**Typeset by : Anjan Prasad**

**Printed by : SAINATH GRAPHICS**
**Offset Printers, Cottonpet,**
**Main Road, Bangalore -53**

**SRI DIGVIJAYARAMO VIJAYATE**
**SRIMAJJAGADGURU MADHWACHARYA**
**MOOLAMAHASAMSTHANA**

# UTTARADI MATH

Administrative Office :
5th Cross, Shankarpuram, Basavanagudi,
BANGALORE - 560004. Phone : 26678726/22426203

**श्रीगुरुभ्यो नमः श्रीशो विजयते**

**श्रीमज्जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानश्रीमदुत्तरादिमठाधीशानां**

## श्री श्री १००८ श्री सत्यात्मतीर्थानाम्
## अनुग्रहसन्देशः

भारतभूमिरेव कर्मभूमिरिति निश्चप्रचम् । नात्र सन्देहलेशः । अद्यत्वे बहूनामस्य विषये विगानमस्ति विमानम् । परन्तु समानस्यास्य तत्त्वस्य सम्मानमेव मानप्रियैः मानवैर्विधेयम् ।

**अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।**
**यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः ।। – विष्णुपुराणम्**
**भारतं नाम यद्वर्षं दक्षिणेन मयेरितम् ।**
**तत्कर्मभूमिर्नान्यत्र सम्प्राप्तिः पुण्यपापयोः ।। –मार्काण्डेयपुराणम्**

**बोधायनधर्मसूत्रे —**
**'अथ पतनीयानि । समुद्रसंयानम् ।'**
**समुद्रयानगमनं ब्राह्मणस्य न शस्यते ।**
**सम्भवेद् यदि मोहेन पुनः संस्कारमर्हति ।।**

इत्यादि प्रमाणसन्दर्भावलोकनेन विदेशगमनं पातित्यहेतुः इति निर्णीयते ।

१. विषयस्यास्य अज्ञानेन बहवः यथेच्छं यत्रकुत्रापि सञ्चरन्ति । शास्त्रीयनिषेधे ज्ञाते विवेकिनः विदेशयात्रां परित्यज्य परमात्मनः परानुग्रहभाजो भवेयुः ।

२. यदि वा पूर्वम् एव विदेशं गताः विदेशगमनस्य दोषत्वज्ञानेन प्रायश्चित्तान्याचरेयुः ।

३. अन्यान् वा स्वसम्बन्धेन न दूषयेयुः ।

स्वात्मोद्धाराय अत्रागत्य स्वयोग्यधर्माननुतिष्ठेयुः ।

इति बुद्ध्या पण्डिताः ताम्रपर्णीश्रीनिवासाचार्याः '**सत्कर्मक्षेत्रनिर्णयः**' इति ग्रन्थं प्रमाणसङ्कलनात्मकं विविधवचनविमर्शात्मकं च व्यतनिषुः । महदिदं कार्यम् । उचिते काले समजनि । यस्मिन् शास्त्रे श्रद्धां निधाय सर्वे शास्त्रविदितसत्कर्माणि वितन्वते तस्मिन्नेव शास्त्रे विहितं देशनियमं नाद्रियन्ते इति महदिदमाश्चर्यम् । महानयं विपर्यासः ।

ग्रन्थमिमं निर्माय सज्जनानुपकृतवतः पण्डितान् सदाचारनिरतान् पाठप्रवचनासक्तान् ताम्रपर्णी श्रीनिवासाचार्यान् अस्मदुपास्यः श्रीमूलरामदिग्विजयरामाभिन्नवेदव्यासः ज्ञानादिदानेन समनुगृह्णातु इति प्रार्थयामहे ।

इति नारायणस्मरणानि

Camp : बेङ्गळूरु
Date : ०२.१२.२००७

**श्री सत्यात्मतीर्थाः**
उत्तरादिमठः

॥ ಓಂ ॥

॥ ಶ್ರೀದಿಗ್ವಿಜಯರಾಮೋ ವಿಜಯತೇ ॥

ಶ್ರೀಮಜ್ಜಗದ್ಗುರು ಶ್ರೀಮಧ್ವಾಚಾರ್ಯಮೂಲಮಹಾಸಂಸ್ಥಾನ

# ಉತ್ತರಾದಿ ಮಠ, ಬೆಂಗಳೂರು.

ಶ್ರೀಮಜ್ಜಗದ್ಗುರು ಶ್ರೀಮಧ್ವಾಚಾರ್ಯಮೂಲಮಹಾಸಂಸ್ಥಾನ ಶ್ರೀಮದುತ್ತರಾದಿ ಮಠಾಧೀಶರಾದ ಶ್ರೀ 1008 ಶ್ರೀಸತ್ಯಾತ್ಮತೀರ್ಥರ

## ಅನುಗ್ರಹ ಸಂದೇಶದ ಕನ್ನಡಾನುವಾದ

ಭಾರತಭೂಮಿಯೇ ಕರ್ಮಭೂಮಿಯೆಂಬುವುದು ನಿಶ್ಚಿತವಿಚಾರ. ಈ ವಿಷಯದಲ್ಲಿ ಸಂಶಯವೇ ಇಲ್ಲ. ಆದರೆ ಈ ಕಾಲದಲ್ಲಿ ಬಹಳ ಜನರಿಗೆ ಈ ವಿಷಯದಲ್ಲಿ ನಿರ್ಬೀಜ ಸಂಶಯವಿರುತ್ತದೆ. ಪ್ರಮಾಣಪ್ರಮಿತವಾದ ಈ ವಿಷಯದಲ್ಲಿ ಪ್ರಮಾಣಾಭಿಮಾನಿಗಳು ಸಮ್ಮಾನವನ್ನು ಮಾಡಬೇಕು.

ಅತ್ರಾಪಿ ಭಾರತಂ ಶ್ರೇಷ್ಠಂ ಜಂಬೂದ್ವೀಪೇ ಮಹಾಮುನೇ ।
ಯತೋ ಹಿ ಕರ್ಮಭೂರೇಷಾ ಹ್ಯತೋಽನ್ಯಾ ಭೋಗಭೂಮಯಃ ॥

-ವಿಷ್ಣುಪುರಾಣ

ಭಾರತಂ ನಾಮ ಯದ್ವರ್ಷಂ ದಕ್ಷಿಣೇನ ಮಯೇರಿತಮ್ ।
ತತ್ ಕರ್ಮಭೂಮಿರ್ನಾನ್ಯತ್ರ ಸಂಪ್ರಾಪ್ತಿಃ ಪುಣ್ಯಪಾಪಯೋಃ ॥

- ಮಾರ್ಕಾಂಡೇಯ ಪುರಾಣ.

ಬೋಧಾಯನ ಧರ್ಮಸೂತ್ರದಲ್ಲಿ –

'ಅಥ ಪತನೀಯಾನಿ । ಸಮುದ್ರ ಸಂಯಾನಂ ।....'
ಸಮುದ್ರಯಾನ ಗಮನಂ ಬ್ರಾಹ್ಮಣಸ್ಯ ನ ಶಸ್ಯತೇ ।
ಸಂಭವೇತ್ ಯದಿ ಮೋಹೇನ ಪುನಃ ಸಂಸ್ಕಾರಮರ್ಹತಿ ॥'

ಇತ್ಯಾದಿ ಪ್ರಮಾಣಗಳನ್ನು ಗಮನಿಸಿದಾಗ ವಿದೇಶಯಾತ್ರೆಯು ಪಾತಿತ್ಯಕ್ಕೆ ಕಾರಣವಾಗುತ್ತದೆ ಎಂದು ನಿರ್ಣಯಿಸಬಹುದು.

1. ಈ ವಿಷಯದ ಬಗ್ಗೆ ಅಜ್ಞಾನವಿರುವುದರಿಂದ ಬಹಳ ಜನರು ಎಲ್ಲಕಡೆ ಸಂಚರಿಸುತ್ತಾರೆ. ಶಾಸ್ತ್ರದಲ್ಲಿ ಇದನ್ನು ನಿಷೇಧಿಸಲಾಗಿದೆ ಎಂದು ತಿಳಿದಮೇಲೆ ವಿವೇಕಿಗಳು ವಿದೇಶ ಯಾತ್ರೆಯನ್ನು ಬಿಟ್ಟು ಪರಮಾತ್ಮನ ಪರಮಾನುಗ್ರಹಕ್ಕೆ ಪಾತ್ರರಾಗಬೇಕು.

2. ಒಂದು ವೇಳೆ ಮೊದಲೇ ವಿದೇಶಕ್ಕೆ ಹೋಗಿದ್ದರೆ, ವಿದೇಶಗಮನವು ದೋಷ ಎಂಬ ಜ್ಞಾನವುಳ್ಳವರಾಗಿ ಪ್ರಾಯಶ್ಚಿತ್ತವನ್ನು ಮಾಡಿಕೊಳ್ಳಬೇಕು .

3. ಪ್ರಾಯಶ್ಚಿತ್ತ ಮಾಡಿಕೊಳ್ಳಲಾಗದಿದ್ದವರು ತಮ್ಮ ಸಂಪರ್ಕದಿಂದ ಮತ್ತೊಬ್ಬರನ್ನಾದರೂ ಹಾಳುಮಾಡದಿರಲಿ. ತಮ್ಮ ಉದ್ಧಾರಕ್ಕಾಗಿ ಈ ದೇಶಕ್ಕೆ ಬಂದಮೇಲೆ ತಮಗೆ ಯೋಗ್ಯವಾದ ಧರ್ಮಗಳನ್ನು ಆಚರಿಸಬೇಕು.

ಈ ರೀತಿಯಾಗಿ ಆಲೋಚಿಸಿ ಪಂಡಿತರಾದ ಶ್ರೀತಾಮ್ರಪರ್ಣೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರು 'ಸತ್ಕರ್ಮಕ್ಷೇತ್ರನಿರ್ಣಯಃ' ಎಂಬ ಪ್ರಮಾಣಸಂಕಲನಾತ್ಮಕ ಮತ್ತು ವಿಮರ್ಶಾತ್ಮಕ ಗ್ರಂಥವನ್ನು ರಚನೆ ಮಾಡಿದ್ದಾರೆ. ಬಹಳ ದೊಡ್ಡ ಕೆಲಸವಿದು. ಉಚಿತವಾದ ಸಮಯದಲ್ಲಿ ಬಂದಿದೆ. ಯಾವ ಶಾಸ್ತ್ರದಲ್ಲಿ ಶ್ರದ್ಧೆಯನ್ನು ಇಟ್ಟು ಎಲ್ಲರೂ ಈ ಶಾಸ್ತ್ರದಲ್ಲಿ ಹೇಳಿದ ಸತ್ಕಾರ್ಯಗಳನ್ನು ಮಾಡುತ್ತಾರೋ, ಅದೇ ಶಾಸ್ತ್ರದಲ್ಲಿ ಹೇಳಿರುವ ದೇಶದನಿಯಮಗಳಿಗೆ ಬೆಲೆಕೊಡುವುದಿಲ್ಲವೆಂದಾದರೆ, ಇದಕ್ಕಿಂತ ಆಶ್ಚರ್ಯ ಹಾಗೂ ವಿಪರ್ಯಾಸ ಬೇರೊಂದಿಲ್ಲ .

ಈ ಗ್ರಂಥವನ್ನು ರಚಿಸಿ ಸಜ್ಜನರಿಗೆ ಉಪಕಾರಮಾಡಿರುವ ಪಂಡಿತರಾದ, ಸದಾಚಾರದಲ್ಲಿ ನಿರತರಾದ ಹಾಗೂ ಪಾಠ ಪ್ರವಚನಾಸಕ್ತರಾದ ಶ್ರೀ ತಾಮ್ರಪರ್ಣೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಿಗೆ ಅಸ್ಮದುಪಾಸ್ಯಮೂರ್ತಿ ಶ್ರೀಮೂಲರಾಮ, ದಿಗ್ವಿಜಯರಾಮಾಭಿನ್ನ ಶ್ರೀವೇದವ್ಯಾಸದೇವರು ಜ್ಞಾನಾದಿಗಳನ್ನು ಕೊಡಲಿ ಎಂದು ಪ್ರಾರ್ಥಿಸುತ್ತೇವೆ.

ಇತಿ ನಾರಾಯಣ ಸ್ಮರಣೆಗಳು,<br>
ಶ್ರೀಸತ್ಯಾತ್ಮತೀರ್ಥರು ,<br>
ಉತ್ತರಾದಿಮಠ.

H.H. SRI VISHVESHA TIRTHA SWAMIJI,
SRI PEJAVARA ADHOKSHJAMATHA,
JAGADGURU SRIMADHWACHARYAMAHASAMSTHANA,
UDUPI - 576 101, KARNATAKA,
PH. 0820-2524198, 2526598.

श्री श्री विश्वेशतीर्थश्रीपादाः
श्री पेजावराधोक्षज मठः
जगद्गुरु श्रीमध्वाचार्यमहासंस्थानम्,
उडुपि -५७६१०१, कर्नाटक.

# अनुग्रहसन्देशः

पण्डितवर्यताम्रपर्णीश्रीनिवासाचार्यैः विरचितं कर्मभूमिप्रदेशस्य सत्यसंशोधनं विदधानं सत्कर्मक्षेत्रनिर्णयाभिधानं ग्रन्थप्रधानं सहर्षम् अभिनन्दामः । अत्र हि विविधपुराणोपनिषद्धर्मशास्त्रवचनानि सम्यक् परिशील्य भरतखण्डनिवासस्यैव सत्कर्मचयनेन सार्थकता, विदेशवासस्य अनर्थहेतुता च साधु समर्थिता । एतद्ग्रन्थनिरूपितान् महितान् धार्मिकनिर्णयान् महता हर्षेण समनुमन्यामहे वयम् ।

परन्तु विरचितविदेशवासानाम् अतिपवित्रेषु तन्त्रसारादिनिरूपितेषु श्रीमदाचार्यकरार्चितश्रीकृष्णपूजादेवालयार्चनादिषु अधिकाराभावेऽपि दैनन्दिन-सन्ध्यावन्दनादिनित्यकर्मसु अवकाशः संवर्तते । विदेशकृतकर्मणामपि अल्पीयसः फलस्य विद्यमानतया विदेशवासिभिः भारतीयैः तत्रापि वैदिकसंस्कृतिपरिपालनं विधेयम् इति विभावयामो वयम् । सर्वथा सत्यसत्वपूर्णां कृतिमिमां स्वागतीकुर्मः ॥

इत्यनेकनारायणस्मरणानि
श्री श्रीविश्वेशतीर्थश्रीपादाः

Poornaprajna Vidyapeetha, Katriguppa Main Road, Bangalore, 560 028
Tel : 091-80-26791728
E-mail. ppsmb1@gmail.com

(ಅಂತಿಮಕ್ಷಣಗಳಲ್ಲಿ ಈ ಅನುಗ್ರಹಸಂದೇಶವು ಪ್ರಾಪ್ತವಾಗಿದೆ. ಅನುಗ್ರಹಸಂದೇಶವನ್ನು ಕಳುಹಿಸಿಕೊಟ್ಟು ಸ್ವಾಭಿಪ್ರಾಯವನ್ನು ವ್ಯಕ್ತಪಡಿಸಿ ಈ ಗ್ರಂಥದ ಗೌರವಕ್ಕೆ ಮೆರಗು ನೀಡಿದ ಶ್ರೀಚರಣರಲ್ಲಿ ನಮ್ಮ ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರಪೂರ್ವಕ ಕೃತಜ್ಞತೆಗಳು. – ಸಂಪಾದಕ)

# ಪರ್ಯಾಯ ಶ್ರೀಕೃಷ್ಣಾಪುರ ಮಠ,
# ಶ್ರೀಕೃಷ್ಣಮಠ,
## ರಥಬೀದಿ, ಉಡುಪಿ.

ಶ್ರೀಪರ್ಯಾಯಪೀಠಾಧೀಶರಾದ ಶ್ರೀ 108 ಶ್ರೀವಿದ್ಯಾಸಾಗರತೀರ್ಥ ಶ್ರೀಪಾದರ

## ಅನುಗ್ರಹ ಸಂದೇಶ

ವಿದ್ವಾಂಸರಾದ ತಾಮ್ರಪರ್ಣೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರ 'ಸತ್ಕರ್ಮಕ್ಷೇತ್ರನಿರ್ಣಯ' ಎಂಬ ಕೃತಿಯನ್ನು ಕಂಡು ಸಂತೋಷಪಟ್ಟಿದ್ದೇವೆ. ಶ್ರೀಯುತರು ಅದರಲ್ಲಿ ಮಾರ್ಕಂಡೇಯ ಪುರಾಣ, ವಿಷ್ಣುಪುರಾಣಾದಿ ಸಚ್ಛಾಸ್ತ್ರಗಳ ಆಧಾರದಲ್ಲಿ ಭಾರತದೇಶ ಮಾತ್ರ ಕರ್ಮಕ್ಷೇತ್ರ ಎಂಬುದನ್ನು ಸಮರ್ಥಿಸಿ ಸಾಧಕರಿಗೆ ಸಾಧನಾನುಷ್ಠಾನಕ್ಕೆ ಸೌಲಭ್ಯವನ್ನು ಕಲ್ಪಿಸಿಕೊಟ್ಟಿರು-ವರು.

ಈ ಕೃತಿಯ ಸದುಪಯೋಗವನ್ನು ಎಲ್ಲಾ ಸಾತ್ವಿಕರೂ ಪಡೆದುಕೊಳ್ಳುವಂತಾಗಲೆಂದೂ, ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಿಂದ ಇಂತಹ ಕೃತಿಗಳು ಇನ್ನಷ್ಟು ಬರುವಂತಾಗಲೆಂದೂ, ಮಧ್ವವಲ್ಲಭನಾದ ಉಡುಪಿ ಶ್ರೀಕೃಷ್ಣನನ್ನೂ, ನಮ್ಮ ಆರಾಧ್ಯದೇವರಾದ ಕಾಳೀಯಮರ್ದನ ಶ್ರೀಕೃಷ್ಣದೇವರಲ್ಲಿಯೂ ಪ್ರಾರ್ಥಿಸುವೆವು.

ಇತ್ಯನೇಕ ಶ್ರೀಮನ್ನಾರಾಯಣಸ್ಮರಣೆಗಳು,

ಶ್ರೀ ಶ್ರೀ ವಿದ್ಯಾಸಾಗರತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರು

ಪರ್ಯಾಯ ಶ್ರೀಕೃಷ್ಣಾಪುರ ಮಠ, ಉಡುಪಿ.

# SRI PALIMARU HRISHIKESHA TIRTHA MATHA, CARSTREET, UDUPI

।। श्रीगुरुभ्यो नमः।।

श्रीमज्जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थान श्रीपलिमारु हृषिकेशतीर्थ मठाधीशानां

## श्री श्री विद्याधीशतीर्थानाम्

## अनुग्रहसन्देशः

धर्माधर्माद्यतीन्द्रियपदार्थजातं वीक्षितुं वीक्षयितुं न प्रत्यक्षं क्षमते ।स्वेच्छाचारि च अनुमानं परमुखं प्रतीक्षमाणं न स्वतन्त्रतया धर्मादि प्रख्यापयितुं प्रभवति । धर्माद्यतीन्द्रियं वेदयितुं निर्दोषात् शब्दराशेः ऋते नान्यत् शरणम् । परिशेषात् धर्मादेः शासनं धर्मशास्त्रमेवार्हति । धर्मः तच्छासकं शास्त्रं वा नैव काल–बाधितम्, अपि तर्हि कलिबाधितम् । कलिमन्मतिबाधितम् । तमेव धर्मं तच्छासकं शास्त्रं च अवमन्तारं कालबाधितं मन्वानं साधूनप्यसाध्वध्वसु नयन्तं काल एव बाधते ।

विद्वान् सदाचारसम्पन्न श्री ताम्रपर्णी श्रीनिवासाचार्यः इति सुगृहीतनामधेयः विदेशप्रवासदोषिताविष्कारकंविदेशानामकर्मभूमितावेदकंपुण्यभूमिमर्यादाबोधकं परदेशयाननिराकारकं प्रमाणतमं पौरुषेयापौरुषेयशब्दप्रपञ्चमेव एकत्र क्रोडीकृत्य सतां पुरस्तात् उपातिष्ठितत्। महदेतस्य एतत्प्रयतनं च सुरैरपि अनुगृहीतं नूनं भूजसुरैरपि पूजनीयम् अभिनन्दनीयं च ।

भगवानाचार्यवर्यः तत्पाणिपद्माराधितः भैष्मीसत्यासमेतः श्रीकृष्णश्च तमेनं ताम्रपर्णी आचार्यमहोदयं तत्कृतकृतिरत्नं च अनुगृह्णातु इति तावेव प्रार्थयामहे ।

इति

सप्रेमनारायणस्मरणानि

**श्री श्री विद्याधीशतीर्थाः**

7

# SRI BHANDARAKERI MATHA, CARSTREET, UDUPI

।। श्रीगुरुभ्यो नमः।।

श्री भण्डारकेरि मठाधीशानां

## श्री श्री विद्येशतीर्थानाम्

## अनुग्रहसन्देशः

'भारतमेव कर्मक्षेत्रम्' इतीमं प्रमेयमधिकृत्य सूरिभिः श्री श्रीनिवासाचार्य ताम्रपर्णी महोदयैः बहुस्मृतिसमवायसंवादसमलंकृतः प्रबन्धो मण्डितः । तैः तत्र समुद्रयानं म्लेच्छदेशावासश्च पातकहेतुत्वात् देवलादिस्मृतौ निषिद्धौ इति सप्रमाण-मुपपादितम् । 'न म्लेच्छविषयं गच्छेत्' इति विष्णु स्मृत्यादिवाक्यं समुद्धृत्य चातुर्वर्ण्यव्यवस्था यत्र देशे नास्ति स म्लेच्छदेशः इति तत्रत्यं म्लेच्छदेशलक्षण-वर्णनमपि प्रदर्श्य अमेरिकादिखण्डाः म्लेच्छदेशाः इति समर्थितम् । शान्तिपर्वणि तु म्लेच्छदेशाधिवासात् इह प्रेत्य च **चण्डालत्वं** आपतति इत्युक्तम्। तस्मात् वर्णाश्रमधर्मानर्हस्थलत्वात् पापभूमित्वाच्च अमेरिकादिखण्डगमनं तत्र वासश्च भूतिमिच्छद्भिः वर्णाश्रमधर्मरतैः सर्वथा न कर्तव्यौ । तत्रापि वर्णाश्रमधर्मसंरक्षकैः धर्मपीठाधिरूढैः विवेकानन्दादिनिदर्शनाभासमुदाहृत्य तौ नोपपादनीयौ नापि अन्यैस्तेषां एते कार्ये अभिनन्दनीये ।

श्रीमदाचार्यप्रतिष्ठापितश्रीकृष्णस्य पूजाकैङ्कर्यस्य पावित्र्यादिसंरक्षणार्थं विदेशगतानां पूजानर्हतामधिकृत्य सज्जनानां प्रबोधाय ताम्रपर्णी श्रीनिवासाचार्यैः प्रबन्धमिमं विरचय्य धर्माभिरतिः श्रीकृष्णमध्वभक्तिश्च प्रकाशिता । तान् आचार्यान् अभिनन्द्य श्रीमध्ववल्लभः श्रीकृष्णः ज्ञानभक्त्यादिश्रेयःपरंपरां तेषां वितनोतु इति अस्मदुपास्यः श्रीहनुमद्वल्लभः श्रीजानकीजानिः संप्रार्थ्यते ।

इति श्रीमन्नारायणस्मृतयः

दिनाङ्कः ९/१२/०७

**श्रीविद्येशतीर्थश्रीपादाः**
भण्डारकेरिमठः उडुपि

॥श्रीगुरुराजो विजयते ॥

**परमपूज्य पण्डितप्रवर म।शा।सं। श्रीजालीहाळकेशवाचार्यः**

**'यस्य प्रसादात् परमार्तिरूपात् अस्मात्संसारान्मुच्यते नापरेण', 'यमेवैष वृणुते तेन लभ्यः। तस्यैष आत्मा वृणुते तनूं स्वाम्।', 'बन्धको भवपाशेन भवपाशाच्च मोचकः।', 'दृष्ट्वैव तं मुच्यते', 'आत्मा वाऽरे द्रष्टव्यः।', 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते।'** इत्यादिश्रुतिस्मृतयः परब्रह्मणो विष्णोः अपरोक्षज्ञानमेव परमभक्तिपरमप्रसादद्वारा मोक्षं साधयन्ति अधिकारिणामिति विदितचरमेव सर्वेषां विदुषाम्। तच्च भगवदपरोक्षज्ञानं श्रवणादिरूपां जिज्ञासां विना नैव समुदेतीत्यपि न तिरोहितं प्रेक्षावताम्। प्रदर्शितमेतत् सर्वं श्रीमदानन्दतीर्थभगवत्पादैः **'जिज्ञासोत्थज्ञान-जात्तत्प्रसादादेव मुच्यते'** इत्यादिवचनव्यूहैः प्रमाणसमुदाहरणेन च स्व-भाष्यादौ। प्रपञ्चितं च 'चित्रैः पदैश्च गम्भीरैः वाक्यैर्मानैरखण्डितैः गुरुभावं व्यञ्जयद्भिः' श्रीमज्जयतीर्थ श्रीमच्चरणैः सहृदयहृदयङ्गमसरसमधुराभिः वाग्धाराभिः श्रीमन्न्यायसुधादौ।

सा च ब्रह्मजिज्ञासा वेदेतिकर्तव्यतादिरूपा गुरुप्रसादप्रोद्बलिता अधिकारिणां एव फलोपधायिनी नानधिकारिणामिति मुमुक्षुभिः सोऽधिकारः अवश्यं सम्पादनीय इति शास्त्रतात्पर्यमपि सविस्तरमुपपादितम्। यतो हि स्वोचितेन असङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तं अल्पाधिकारिणमपि न प्रागुत्तराणि कर्माणि बाधन्ते, ततश्च ज्ञानाधिकारी स भवति अतो भगवत्पूजारूपाणि असङ्कल्पितफलानि स्वोचितानि कर्माणि निरन्तरं (आमरणं) सर्वथा कुर्यादेव। स्वोचितकर्मणा भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव। ततश्चासौ नाधिक्रियते अशुद्धचित्त्वात्। अतः कर्माणि कार्याण्येव। स्वकर्मणा भगवत्पूजामकुर्वतः भगवदुपास्त्यकरण-निमित्तेन पापेन आनन्दस्य ह्रासो यतो भवेत् अतः मोक्षप्रच्युतिरूपलेपरहितेऽपि ज्ञानिनि कर्मलेपः स्यादेव। यत एवं उभयोर्लेपोऽतो द्वाभ्यामपि (ज्ञान्यज्ञानिभ्यां) स्वोचितकर्मणा भगवत्पूजा कार्यैव इति श्रीमज्जयतीर्थश्रीमच्चरणैः टीकाकृद्भिः प्रमाणपुञ्जोदाहरणपुरःसरं सम्यगुपपादितम्।

यथा स्वकृषिफलसाधनक्षेत्रे एव उप्तानि बीजानि फलोपधायीनि भवन्ति तथा स्वकर्मफलसाधनभूमावेव अनुष्ठितानि स्वोचितानि (भगवत्पूजारूपाणि) कर्माणि समुचितफलानि जनयेयुः न पुनरनुचितायोग्यक्षेत्रेऽनुष्ठितानि कर्माणि, इत्येषोऽपि विषयो न परोक्षो विदुषां वेदशास्त्रसारं जुषताम् ।

**अन्यस्थाने वृथा जन्म निष्फलं च गतागतम् ।**
**भारते च क्षणं जन्म सार्थकं शुभकर्मणाम् ।।**
**तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।**
**यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः ।।**
**श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।**
**इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।।**

इत्यादि पुराणवचनैरपि अवगम्यते च ।

भागवतेऽपि **'कल्पायुषां स्थानजयात्पुनर्भवात्क्षणायुषां भारतभूजयो वरः'** इत्यतभिहितम् । अत एव भारतेऽपि –

**आस्वर्गमाच पातालं ब्रह्माण्डे विश्वनिर्मिते ।**
**देशोऽयं भारतो वर्षः सारात्सारतरो मतः ।।**

इत्यादीनि भारतदेश(क्षेत्र)वर्णनपराणि वचनानि समुपलभ्यन्ते ।

एवं कर्मफलसाधनक्षेत्रं निरूप्य, श्रेयोऽर्थिना स्वकर्मणां फलप्रेप्सुना अधिकारिणाऽधर्मक्षेत्रं सर्वथा न गन्तव्यमिति सन्मित्राणीव परोपकारप्रवणा निरुपाधिकबन्धव इव भागवतभारतादि पुराणानि सुहृत्संमितैः सरसैः काव्यैरिव कान्तासंमितवचोभिः परमहितं सुखसाधनोपायं दुःखप्रहाणोपायं च समुपदिशन्तीत्यत्र न कापि विप्रतिपत्तिर्विपश्चित्प्रवराणाम् ।

करालेऽस्मिन् कलिकाले समापतितसर्वधर्मविलये सनातनवैदिकधर्मानुष्ठानतत्परशिष्टाचारपरंपरायां लुप्तप्रायायां, किं कर्तव्यमूढानां वर्णाश्रमोचितधर्मानुष्ठानमार्गजिज्ञासूनां आस्तिकानामधिकारिणां, कर्मफलसाधनक्षेत्रादिनिरूपणपरः कोऽपि ग्रन्थः अवश्यापेक्षितः आसीत् । तेषां तदपेक्षापूरणाय श्रीताम्रपर्णीश्रीनिवसाचार्यप्रणीतः **'भारतमेव कर्मक्षेत्रम्'** इति अभिधानेनैव स्वाभिधेयं तत्सार्थक्यं च प्रकाशयन् प्रबन्धः प्रकाशमासाद्यते इति महदिदं प्रमोदस्थानं समेषां आस्तिकानाम् ।

परमपूजनीयानां प्रातःस्मरणीययशोराशीनां विश्वविख्यातानितरसाधारण-शेमुषीवैभवसमासादितसर्वतन्त्रवैदुष्यातिशयानां प्रौढानेकप्रबन्धप्रणेतॄणां श्रीमत्सत्यध्यानतीर्थश्रीचरणपरमप्रियान्तेवासिवराणां सरसमधुरोदारोपन्यासपीयूष-वर्षणैः समानन्दितसुजनहृदयानां अमलैर्धर्मोपदेशैः वर्णाश्रमाचारव्यवस्था-भूषितसनातनवैदिकधर्मरक्षणाय आबद्धदृढदीक्षाणां पण्डितराज श्रीजालीहाळ श्रीनिवासाचार्याणां अस्मद्गुरुवराणां तथा अस्मत्पितृकल्पानां ज्येष्ठभ्रातृचरणानां सुगृहीतनामधेयानां अन्तेवासी तदतिशयकृपापात्रभूतश्च अयं ताम्रपर्णी श्रीनिवासाचार्यः एतद्ग्रन्थप्रणेता ।

अस्मिन् ग्रन्थे ग्रन्थकारैः – **सनातनवैदिकधर्म एव धर्मः स्वोचितेष्वेव देशकालेषु स्वोचितासङ्कल्पितफलभगवत्समर्पणसहित कर्मानुष्ठानमेव परमो धर्मः तद्विरुद्धः सर्वोऽप्यधर्मः', 'भारतदेश एव स्थितिः तत्रैव च स्वविहितानुष्ठानमेव श्रेयःसाधनं, अन्यत्र विदेशे स्थितिः', 'यात्रा च गमना-गमनं च इत्यादिकं श्रेयोविघातकं महानर्थापादकं च'**

इत्यादयो विषयाः, समयानुसारेण शेमुषीविषयीभूताः विषयाः कूलंकषं सप्रमाणं परीक्षिताः निष्पक्षपातं च विमर्शविषयीकृताः । विदेशयात्राविषयेऽपि प्रमाणैः तत्र गमनागमनादिकं अनर्थसाधनं इति तत्प्रायश्चित्तविधानविमर्शसहितं सनिर्णयं सम्यगुपपादितम् अनेन ग्रन्थकारेण इति ग्रन्थमेनं समग्रमालोकयद्भिः स्पष्टं ज्ञायते । सनातनवैदिकधर्माभिमानिनां महोपकारं समातन्वन्तमिमं ग्रन्थं गुणग्राहिणो वैदिकविद्वांसः अवगाह्य आनन्दातिशयं अनुभवन्तीति गाढं विश्वसिमः ।

अन्ते ग्रन्थकारमेनं –

**'श्रीशस्ते सुश्रियं दद्यादायुर्वायुसुतप्रियः**
**भूमिं ते वामनो दद्यादरीन् हन्तु नृकेसरी ।।'**

इति श्रीमद्वादिराजपूज्यचरणोदीरिताशीर्वचनमुदीर्य सर्वैरपि तदाशीराशिभिः समनुगृह्णातु अस्मद्गुरुहृदयमन्दिरो निखिलनिगमागमकन्धरो हयकन्धरः इति तमेवं भूयः सम्प्रार्थयामः इति शम् ।

गदग – सर्वजित् का.शु १४

**श्री केशवाचार्य जालिहाळ**

।।श्री गुरुभ्यो नमः ।।

**पं. श्रीराघवेन्द्राचार्य गङ्गूर्**

सप्तद्वीपवतीभूमण्डले षट्द्वीपा इव नववर्षवती अष्टवर्षाणि दिनकर्म अपि न कर्मक्षेत्राणि । भारतवर्षमेकमेव कर्मस्थानम् । दैवादीदृशं स्थानं प्राप्य विनाभगवत्सेवां ये अन्यत्र व्याप्रियन्ते तेषां जन्मनिरर्थकम् । धिक् इति भावेन देवैरपि स्तुत्यं इदं भारतवर्षं इति तन्महिमानं प्रतिपादयति –

**अहो बतैषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।**
**यैर्जन्म लब्धं नृषु भारताऽजिरे मुकुन्दसेवौपयकस्पृहात्मभिः ।।२१।।**

**किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वायुजयेन फल्गुना ।**
**न यत्र नारायणपादपङ्कजस्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात् ।।२२।।**

**कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भारतभूजयोः वरः ।**
**क्षणेन मर्त्येन कृतं मनस्विनः सन्न्यस्य संयान्त्यभयं पदं हरेः ।।२३।।**

यदि अस्माकं स्वर्ग सुखाविशिष्टं यज्ञदानादि कर्मार्जितं पुण्यं विद्यते तर्हि तेन पुण्येन अब्जनाभस्मृति हेतुः जन्म अत्र भारते वर्षे स्यात् । कुतः? यतो हरिः एतद् वर्षे एव भजतां अपेक्षितार्थं ददाति तत इति । यथाहुः अत्रापि जम्बूद्वीपे भारतमेव वर्षं कर्मक्षेत्रं अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति इति । तदेवं देवैः अपि साधनानुष्ठानयोग्यतया प्रार्थिते वर्षे साधनमेव अवश्यानुष्ठेयम् । नान्यत्र दृष्टिर्धेयात् इति परमार्थः। भारतवर्षे वनमेव प्रशस्तस्थानं अथवा गृहं ? उभयमपीति ब्रूमः । विरुद्धमेकस्य उभयत्र आवस्थानं इत्यतः अधिकारिभेदेन न विरोधः इति भावेन तत्स्वभावः स्तावत् प्रतिपादितः ।

इदमत्र अवधेयं भागवते अन्यत्रापि नेहयत् कर्मधर्माय नविरोगाय सज्जते, न तीर्थपदसेवायै तस्य जन्म निरर्थकं (देवहूतिवाक्यम्) इह कर्मभूमौ इति विजयद्वजतीर्थाः भुविभारतभूतले इति विजयीन्द्रतीर्थाः, देवाः अपि साधानानुष्ठानार्थं अत्रैव आगच्छन्तीति सुप्रसिद्धम् ।

दक्षिणाम्बुधितीरस्थं वर्षं भारतसंज्ज्ञकम् इति,

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैवदक्षिणम् ।

वर्षं तद् भारतं नाम नवसाहस्रविस्तृतम् ।। — इति वादिराजतीर्थाः ।

ಸಕಲ ದೇವತೆಗಳು ಹಾಗೂ ಋಷಿಗಳ ಸಹ ಪರಮಾತ್ಮನು ಈ ಭಾರತಭೂಮಿಯಲ್ಲೇ ಅವತರಿಸಿದ್ದಾನೆ. ನಿರಪೇಕ್ಷನಾದ, ನಿತ್ಯಸುಖಪೂರ್ಣನಾದ, ಪರಮಾತ್ಮನು ಜನರಸಾಧನಕ್ಕಾಗಿ 'ಯದ್ಯದಾಚರತಿ ಶ್ರೇಷ್ಠಾಃ' ಎಂಬ ನ್ಯಾಯದಿಂದ ಇಲ್ಲಿ ಕರ್ಮ ಆಚರಿಸಿ ತೋರಿಸಿದ್ದಾನೆ. 'ಸತ್ಕರ್ಮಕ್ಷೇತ್ರನಿರ್ಣಯಃ' ಈ ಗ್ರಂಥವನ್ನು ನೋಡಿ ನಮಗೆ ಬಹಳಸಂತೋಷವಾಗಿದೆ. ಇಂತಹ ಒಳ್ಳೆಯಕಾರ್ಯವನ್ನು ಮಾಡಿರುವ ಗ್ರಂಥಕಾರರಾದ ಶ್ರೀತಾಮ್ರಪರ್ಣಿಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಿಗೆ ಆಯುರಾರೋಗ್ಯ ಜ್ಞಾನಭಕ್ತ್ಯಾದಿಗಳನ್ನು ವಿಶೇಷವಾಗಿ ಕೊಟ್ಟು ಭಗವಂತ ಅನುಗ್ರಹಿಸಲಿ ಎಂದು ನಮ್ಮ ಉಪಾಸ್ಯ ಶ್ರೀಭಾರತೀರಮಣಮುಖ್ಯಪ್ರಾಣಾಂರ್ಗತ ಶ್ರೀಹಯಗ್ರೀವದೇವರಲ್ಲಿ ಪ್ರಾರ್ಥಿಸುವೆವು.

**राघवेन्द्राचार्यः गङ्गूर्**

* * *

।।श्रीगुरुभ्यो नमः।।

**म।शा।सं। विद्वांसः श्री बाळगारु श्रीनिवासाचार्याः**

श्रीयुतैः विद्वद्वरैः श्रीताम्रपर्णी श्रीनिवासाचार्यैः प्रणीतः अयं **'सत्कर्मक्षेत्र–निर्णयः'** इत्याभिधानः ग्रन्थः समग्रावलोकनमात्रतः सोत्पुलकमानन्दमातनोतीति सोत्साहमुद्गिरामः ।

**टीकाकृद्व्यासतीर्थान् श्रीराघवेन्द्रमुखान् गुरून् ।**
**सेवे सद्ध्यानतीर्थान् यत्कृतिर्धर्मे प्रमाणकम् ।।**

इति एतद्ग्रन्थस्थमङ्गलश्लोकोक्तरीत्यैव विषयतः अनूतनोप्ययं ग्रन्थः प्रमाणसङ्ग्रहण – प्रगल्भनिरूपण – प्रखरविमर्शनादिभिः स्वकीयामेव काञ्चन नूतनतामाधत्ते । विदेशगमननिषेध–समुद्रयाननिषेधादिविषये समानमानसा–नामपि प्रमाणप्रकर्षानुपलब्ध्यादिभिः अन्तर्गुडुगुडायमानमनस्कानां विदुषां प्रहर्षणाय, तथा विमनस्कानां विदुषां मुखमुद्रणाय च सकालमवततारायं ग्रन्थः।।

**भारतवर्षविचारः**

अत्र च ग्रन्थे देश–विदेशस्वरूपनिर्णयः, कर्मक्षेत्रशब्दार्थपरिष्कारः, अधिकार्यनधिकारिस्वरूपविचारः, विदेशगमनजपातित्यादिविमर्शश्चेत्यादयः बहवः प्रकरणविशेषाः बहुसुन्दरं श्रुतिस्मृत्यादिप्रमाणसहितं संशयाद्यनास्पदं विवेचिताः । प्रथमतः 'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम' इति प्रमाणमनुसृत्य भारतवर्षस्वरूपनिर्णयः कृतः ।

अत्रेदं वक्तव्यमिति भाति । विष्णुपुराणगतैतादृशवाक्यमात्रदर्शनेन हिमवतः दक्षिणभागभूतः समुद्रतश्चोत्तरः प्रदेशस्तु, कन्याकुमारीतः हिमवत्पर्यन्तः इदानीं दृश्यमानः केवलं भारतभूभाग एव भारतवर्षं इति मतिर्भवेत् ।

परन्तु **वायुपुराणे** –

**भारतस्य तु वक्ष्यामि निसर्गं तं निबोधत ।**
**पुण्यतीर्थे हिमवतो दक्षिणस्थाचलस्य हि ।।**
**पूर्वपश्चायतस्यास्य दक्षिणेन द्विजोत्तमाः ।**
**तथा जनपदानां च विस्तारं श्रोतुमर्हथ ।।**

**अत्र वो वर्णयिष्यामि वर्षेऽस्मिन् भारते प्रजाः ।**
**इदन्तु मध्यमं चित्रं शुभशुभफलोदयम् ।**
**उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।**
**वर्षं तद्भारतं नाम यत्रेयं भारती प्रजा ।**
**ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते ।**
**न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।। ४५-७७ ।।**
इत्येवं भारतवर्षस्य स्वरूपमुक्त्वा, ततः
**'भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः ।**
**समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ।। ७८ ।।**
**इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् ।**
**नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।**
**अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ।**
**योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरम् ।।**
**आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै ।**
**तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ।**
**द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु नित्यशः ।**
**पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः ।**
**ब्राह्मणाः क्षत्रियाः वैश्याः मध्ये शूद्राश्च भागशः ।**
**इज्या युद्धवणिज्याभिः वर्तयन्तो व्यवस्थिताः ।।**
**तेषां संव्यवहारोऽयं वर्तते तु परस्परम् ।**
**धर्मार्थकामसंयुक्तो वर्णानां च स्वकर्मसु ।।**
**सङ्कल्पपञ्चमानां तु आश्रमाणां यथाविधि ।**
**इह स्वर्गापवर्गार्थं प्रवृत्तिर्येषु मानुषी ।**
**यस्त्वयं नवमो द्वीपः तिर्यगायत उच्यते ।**
**कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्यते ।। ८६ ।।**

इत्यतैः वाक्यैः भारवर्षस्य नवविभागः, तथा तेषु समुन्द्रान्तरितत्वं, परस्परागम्यत्वं, तत्र नवमभागस्य विशिष्य नामान्तरानुक्तिपूर्वकं भारतत्वम्, तस्य च कन्याकुमारीतः गङ्गोत्रीपर्यन्तत्वम्, तत्रैव चातुर्वर्ण्यचतुराश्रमविशिष्टत्वं, स्वर्गापवर्गफलकत्वं अत एवान्यत्र मध्यान्तमात्रफलकत्वं, इत्यनेके विषयाः स्पष्टतया निरूपिताः सन्ति । एवं सङ्कल्पपूर्वकविधिरप्यत्रैवेति, २२ते पुटे सङ्कल्पविधिक्रमप्रमाणानुगुणः इदानीमप्यस्मासु प्रचलितः 'जम्बूद्वीपे भरतवर्षे

भरतखण्डे' इति सङ्कल्पक्रमोऽपि सुस्पष्टो भवति । तथा च दृश्यमानभरत-खण्डमात्रस्य भारवर्षत्वमिति न मन्तव्यम् ।

**भारतद्वीपदेशो वै दक्षिणे बहुविस्तरः ।**
**एवमेकमिदं वर्षं बहुद्वीपमिहोच्यते ।**
**समुद्रजलसम्भिन्नं खण्डं खण्डीकृतं स्मृतम् । – वायु ४८/४२**
**यदेतद्भारतं वर्षं नवद्वीपं निशाचर ।**
**सागरान्तरिताः सर्वे अगम्याश्च परस्परम् ।। – वामन १३/९**
**भारतस्यास्य वर्षस्य नव भेदान्निबोध मे ।**
**समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ।।**
**इन्द्रद्वीपः कशेरुमान् ताम्रवर्णो गभस्तिमान् ।**
**नागद्वीपस्तथा सौम्यो गान्धर्वो वरुणस्तथा ।**
**अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ।**
**पूर्वे किराता यस्यान्ते पश्चिमे यवनास्तथा ।।**
**ब्राह्मणा क्षत्रिया वैश्या शूद्राश्चान्तस्थिता द्विज ।**
**इज्याध्यायवणिज्याद्यैः कर्मभिः कृतपावनाः ।**
**तेषां संव्यवहारश्च एभिः कर्मभिरिष्यते ।।**
**स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च वै तदा ।। – मार्कण्डेये ५४/१०**

कूर्मे ४७-२५ ब्रह्माण्डे १६-१४ इत्यादिनानापुराणानुगुणोऽयं भरत-वर्षगतभरतखण्डविचार इति ज्ञेयम् ।।

## कर्मभूमिशब्दार्थः

एतस्यैव भरतखण्डस्य वर्णाश्रमधर्मकर्मभूमित्वम् । यद्यपि भारतवर्षे कर्मभूमि शब्दप्रयोगेऽपि, देशवाचिवर्षशब्दस्य भरतखण्डपरत्वेनैव बहुत व्यवहारात्, 'ब्रह्मत्वममरेशत्व'मिति वाक्ये 'कर्मभूमिरियं स्वर्गमपवर्गं च गच्छता'मित्यत्रापि कर्मभूपदेन भरतखण्डस्य विशिष्यग्रहणात्, ब्राह्मणकर्मानुष्ठानसन्दर्भे एव कर्मण्याकर्मण्यशब्दपूर्वकं देशविभागस्य आचार्यैः भागवततात्पर्ये निरूपणात्, कर्मभूमित्वेन लौकिकवैदिकरूढि सत्वात् मुख्यामुख्ययोः मुख्ये सम्प्रत्ययाच्च भरतखण्डस्यैव कर्मभूमित्वमितरेषां तु पापकर्मभूमित्वमिति भावेन वर्णाश्रमधर्मप्रयुक्तफलसाधकभूमित्वमिति यदस्मिन् ग्रन्थे कृतं परिष्करणं

तदविप्रतिपन्नमिति मन्यामहे । न चैवमतोऽन्या भोगभूमय' इति वचनादितरखण्डानां भोगभूमित्वं शङ्क्यम् । पापकर्मभूभिन्नत्वस्यापि तदर्थत्वात् तस्य च वर्षान्तरद्वीपान्तरमात्रसङ्गतेः । अत एवास्य ग्रन्थस्य **'सत्कर्मक्षेत्रनिर्णयः'** इत्यभिधानमपि स्वारसिकमिति सन्तोष्टव्यं बुभूषुभिः ।

## प्रकृतभूभाग विचारः

भारतवर्ष एव चतुर्युगसद्भावात् प्रकृतसमये भरतखण्डवदेव चतुर्युगानुगुणादिनमानादिमण्डितप्रकृतोपलभ्यमानाः सर्वेऽपि भूप्रदेशाः भारतवर्षस्यैव अवशिष्टाष्टखण्डभागा वा भारतवर्षसम्बन्धि – आन्तरद्वीप–विशेषा वा इति वक्तव्यं भवति । वर्षान्तराणां प्लक्षादिद्वीपान्तराणां च तद्गतान्तरद्वीपादीनां च एतद्युगानुगुण्यासम्भवात् । हर्यादिवर्षाणां प्लक्षादिद्वीपानां च स्वर्गसदृशतया आधिव्याधिजरावर्जितसुखमात्रोपभोगयोग्यस्थानत्वेन वर्णितत्वात्, देवतालक्षणभूयिष्ठत्वात् प्रकृतोपलभ्यमानभूभागानां भारतातिरिक्तानां इतरवर्षादिप्रदेशताया ऊहितुमप्यक्यत्वात् । अत एव पुराणवर्णितानां तादृशप्रदेशानां इदानीमदृश्यत्वाङ्गीकरणं स्वारसिकं भवति । न ह्याधिव्याधिजरादिरहितप्रदेशः कश्चिदपीदानीं समुपदृश्यते । न चैतावद्यौक्तिकमात्रम् ।

**भारतस्य तु वर्षस्य भेदास्ते नव कीर्तिताः ।**
**इहोदितस्य दृश्यन्ते तथान्येऽन्यत्र नोदिते ।।** (वायु ४७–७८)
**ते भारस्य वर्षस्य भेदा ये न प्रकीर्तिता ।**
**इहोदितस्य दृश्यन्ते अन्ये त्वन्यत्र चोदिताः ।।** –(मत्स्य १२२–८०)

इति पुराणवाक्यदर्शनेन भारतवर्षप्रदेशानां दृश्यत्वं अन्येषामदृश्यत्वमिति भावः ज्ञायते । मुद्रितपाठस्यात्र अशुद्धत्वेऽपि दृश्यादृश्यविभागोऽत्राभिप्रेत इति तु स्पष्टं ज्ञायते ।

किञ्च लिङ्गपुराणे –

**इन्द्रद्वीपं तथा केचित् तथैव च कसेरुके ।**
**ताम्रद्वीपं गताः केचित् केचिद्देशं गभस्तिमत् ।**
**नागद्वीपं तथा सौम्यं गान्धर्वं वरुणं गताः ।**
**केचिन्म्लेच्छाः पुलिन्दाश्च नानाजातिसमुद्भवाः ।।'** (पू. ५८–२८)

इति वाक्यैः भरतखण्डातिरिक्तखण्डगतानां नराणां म्लेच्छपुलिन्दादिरूपता कथ्यते । एवं च इदानीं म्लेच्छादिभूयिष्ठानां भरतखण्डातिरिक्तोपलभ्यमान-भूप्रदेशानां तादृशाष्टखण्डरूपता तदन्यमता वा अधिकं सम्भाविता भासते । परन्तु भरतखण्डतःबहुदूरान्तरितत्वात् तदेवेदमिति स्पष्टं निर्धारयितुं न प्रभवामः । अवशिष्टाष्टखण्डविषये समुद्रमग्नता वा स्यात् खण्डसञ्चलनादि-प्रकृतविज्ञानवादानुसारेण दूरस्थता वा स्यादित्येतावन्मात्रं वक्तुं पारयामः । यदि अवशिष्टाष्टखण्डानामगोचरता तर्हि गोचरा इमे भरतखण्डातिरिक्ता भूप्रदेशास्तु भारतवर्षस्यान्तरद्वीपविशेषा इति तु अवश्यं वक्तव्यं भवति । तथा हि तद्वर्णनं वायुपुराणे –

दक्षिणेनापि वर्षस्य भारतस्य निबोधत ।
दशयोजनसाहस्रं समतीत्य महार्णवम् ।।
त्रीण्येव तु सहस्राणि योजनानां समायतम् ।
अतस्त्रिभागविस्तीर्णं नानापुष्पफलोदयम् ।।
विद्युत्वन्तं महाशैलं तत्रैकं कुलपर्वतम् ।
येन कूटतटैर्नैकैस्तद्वीपं समलङ्कृतम् ।।
प्रसन्नस्वादुसलिलास्तत्र नद्यः सहस्रशः ।
वाप्यस्तस्य तु द्वीपस्य प्रवृत्ता विमलोदकाः ।
तस्य शैलस्य छिद्रेषु विस्तीर्णेष्वायतेषु च ।
अनेकेषु समृद्धानि नानाकाराणि सर्वशः ।
नरनारीसमाढ्यानि मुदितानि महान्ति च ।
तेषां तलप्रवेशानि सहस्राणि शतानि च ।
पुराणि सन्निविष्टानि पर्वतान्तर्गतानि च ।।
दीर्घश्मश्रुधरात्मानः नीला मेधसमप्रभाः ।
जातमात्राः प्रजास्तत्र अशीतिपरमायुषः ।।
शाखामृगसधर्माणः फलमूलाशिनस्तथा ।
गोधर्माणो ह्यनिर्दिष्टाः शौचाचारविवर्जिताः ।
तद्वीपं तादृशैः पूर्णं मनुजैः क्षुद्रमानुषैः ।
एवमेतेऽन्तरद्वीपा व्याख्याता आनुपूर्वशः ।
विंशत् त्रिशंच्च पञ्चाशत् षष्ठ्यशीतिः शतं तथा ।
सहस्रमपि चाप्युक्तं योजनानां समन्ततः ।

**विस्तीर्णाश्चायताश्चैव नानासत्वसमाकुलाः ।**
**बर्हिणद्वीपपर्वाणि क्षुद्रद्वीपाः सहस्रशः ।।** – वायु ४८/१२

अनेन अशीतिपरमायुष्कत्व – शौचाचारवर्जितत्व – गोधर्मत्व – शाखामृग-सधर्मत्व – अनिर्दिष्टत्व – क्षुद्रमानुषत्वादिपुराणवर्णितलक्षणाढ्याः प्रकृतसन्दर्भे भरतखण्डातिरिक्ते आफ्रिकादिखण्डे दृश्यन्त इति आन्तरद्वीपप्रदेशा एव इदानीं भरतखण्डातिरिक्तभूप्रदेशा इति स्पष्टं वक्तव्यं भवति । सर्वथापि सर्वेषामेषां प्रदेशानां वर्णाश्रमानुबन्धिद्विजधर्मानङ्गत्वं तु निश्चप्रचम् । हिमवदुत्तरपार्श्वे इदानी-मुपलभ्यमानभूप्रदेशानामपि तादृशत्वमेव । तत्र भूखण्डानां सञ्चलनतः संयोगवियोगानां कालविशेषतः साध्यत्वात् वियुक्तानां तेषां क्वचिदिदानीं संयुक्तावगम्यत इति युक्तमुत्पश्यामः । अत्र सर्वत्र प्रधानं बीजं तु भरत-खण्डातिरिक्तभारतवर्षभागत्वेन पापदेशत्वम् । तच्च बृहदारण्यके वर्णितम् ।

## पापदेशनिश्चयः

ननु बृहदारण्यकोक्तपापदेशः अयमेवेति कथं निश्चीयत इति चेत् , उच्यते । तत्र हि देवतासाधनविचारप्रकरणं वर्तते । वायुदेवानुग्रहात् पूर्वं, पाप्मना विद्धत्वात् देवानां स्वपदप्राप्तिसाधनमासाध्यमासीत् । वायुदेवानुग्रहेण तु निष्पापाः सन्तः इमे देवाः स्वस्वपदग्रहणं (देवपदवीं) अकुर्वन्निति हि तत्र कथा । एवं स्वीयपदप्राप्तिसाधनतत्पराणां तेषां साधनक्षेत्रं तावत् भरतखण्ड एव ।

**ब्रह्मत्वममरेशत्वं देवत्वं मर्त्यतां तथा ।**
**प्रयाति कर्मभूर्ब्रह्मन् नान्या लोकेषु विद्यते ।।'** – मार्कण्डेय
**इन्द्राद्याश्च सुरास्सर्वे तस्मिन् वर्षे द्विजोत्तमाः ।**
**कृत्वा सुशोभनं कर्म देवत्वं प्रतिपेदिरे ।।** – ब्रह्म २५/६)
**अनधीकारिणो देवाः स्वर्गस्था भारतोद्भवम् ।**
**वाञ्छन्त्यात्मविमोक्षार्थं उद्रेकार्थेऽधिकारिणः ।।**
– **भागवतपञ्चमतात्पर्ये**

इत्यादिप्रमाणैः देवतानां स्वपदप्राप्त्यर्थं भारते साधनावश्यम्भावात् । तथा च देवतासाधनक्षेत्रादन्यस्मिन् प्रदेशे पापप्रक्षेप इति बृहदारण्यकाशस्य भरतखण्डातिरिक्तप्रदेश इति स्पष्टं पर्यवसानमिति, तस्य चातिरिक्तप्रदेशस्य

भूस्वर्गत्वेन प्रतिपाद्यमानेतरवर्षद्वीपादिभिन्नत्वं च (भोगभूमिभिन्नत्वं) आवश्यकमिति, तादृशो देशस्तु इदानीमुपलभ्यमानः सर्वोऽपि भारतातिरिक्तः प्रदेश इति निर्णयः सम्पद्यते । तथा च स्वर्गापवर्गसाधनभूतकर्मकरणं भारतादन्यत्र नास्तीत्येव सम्यगुक्तं भवति । यतो हि तत्र तत्प्रतिबन्धकपापप्रक्षेपः कृतः । अत एव भरतखण्डस्यैव स्वर्गापवर्गसाधकत्वमहिमा हृदयङ्गमतया विज्ञायते ।

## यवनादीनां कर्तव्यकर्मनिरूपणम्

एतावता भरतखण्डादन्यत्र विद्यमानानां साधनमेव नास्तीति न मन्तव्यम् । स्वर्गापवर्गसाधककर्माभावेऽपि स्वर्गापवर्गसाधनीभूत-भरतखण्डजन्म-साधकतया तत्रापि साधनानुष्ठानावश्यम्भावात् । तथा च पुराणसारे यवनादीनां कर्तव्यधर्मसङ्ग्रहक्रमः —

**ऋषयः –**

**यवनाः किराता गान्धाराश्चीनाश्शबरबर्बराः ।**
**शाखाः सुराहाः खल्वाश्च पल्लवाश्चान्ध्रमद्रकाः ।**
**दुस्स्थाः पुलिन्दा आमर्दा काञ्चा म्लेच्छाश्च सर्वशः ।**
**कथं धर्मं चष्यिन्ति सर्वे विषयवासिनः ।**
**एतदिच्छामहे श्रोतुं भगवांस्तद्ब्रवीतु नः ।।**

**सूतः –**

**मातापित्रोश्च शुश्रूषा कर्तव्या सर्वदस्युभिः ।**
**आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ।।**
**भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।**
**देशधर्मक्रियाश्चापि तेषां धर्मो विधीयते ।**
**पितृयज्ञस्तथा कूपाः प्रपाश्च शयनानि च ।**
**दानानि च यथाकाले दातव्यानि द्विजातिषु ।**
**पाकयज्ञा महार्थाश्च दातव्याः सर्वदस्युभिः ।**
**एतान्येवं प्रकारेण विहितानि द्विजोत्तमाः ।**
**सर्वलोकस्य कर्माणि कर्तव्यानीह दस्युभिः ।।** **(अ-३०-६)**

ततश्च भरतखण्डातिरिक्तभूप्रदेशे कर्तव्यविशेषाभावात्पापाभाव इति क्षुद्रशङ्काया अनवसर एव । तत्र चातुर्वर्ण्यचतुराश्रमानुबन्धिद्विजकर्मानर्हत्वेऽपि इतरकर्म-

नियतेरवश्यम्भावात् । अत्र चाचार्यगुर्वाश्रमवासिनः भरतखण्डगता दस्युभिः सेव्या इति भावः । आचार्यादिस्थानापन्नानां पापभूमिगमने पातित्येन आचार्यत्वाद्यनुपपत्तेः । एवं पितृयज्ञादिकमपि तद्विहितरीत्येति, द्विजधर्मरीत्या म्लेच्छदेशे श्राद्धनिषेधवचनानामुपपत्तिर्बोद्धया । अत एव –

**किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः शकादयः ।**
**येऽन्ये च पापा यदुपाश्रयाश्रयाच्छुद्ध्यन्ति तस्मै प्रभविष्णवे नमः ।।**

इति भागवतभावोऽपि हृदयङ्गमो भवति । एतेन म्लेच्छदेशगमनस्य निषिद्धत्वे तेषां धनादिकमपि कथं गृह्यत इति कुचोद्यानवकाशः । तेनैव तदुद्धारमार्गात् ।

**पापदेशे न वर्णाश्रमधर्मफलम्**

भरतखण्डस्थानामपि तत्र गमने दस्युधर्माणामेवैतादृशानां अनुष्ठानाधिकारिता । न वर्णाश्रमधर्मावकाशः ।

**अधर्मदेशमध्ये तु कृत्वा क्रतुशतान्यपि ।**
**न पश्यन्ति द्विजाः श्रेयः यातुः स्वर्गे महार्गळम्'** – स्मृ.चं २२पु

इति स्पष्टं फलाभावप्रतिपादनात् । ननु सत्यधर्मतीर्थानां रामायणव्याख्याने 'लङ्काया अकर्मभूमित्वेऽपि तत्रत्यानामपि नित्याह्निके जपहोमादौ अधिकारः सम्भवति । परन्तु अङ्गवैकल्येन अकर्मभूमिषु यथोक्तफलं नायास्यति । ब्राह्मण्याच्च स्वाध्यायादिसर्वकर्मसु अधिकारः' इति अकर्मभूमौ जपहोमादीनामनुष्ठानावकाशः पूर्णफलाभावेऽपि यत्किञ्चित् फलं च वर्णितमिति अमेरिकाद्यकर्मभूमिगतानां विप्राणां जपहोमाद्यनुष्ठानावकाशः अस्ति इति चेत् । तन्न । भोगभूमिषु तथा सम्भवेऽपि पापभूमौ तदनवकाशात् । तथा हि 'तेषां स्वभावतः सिद्धिः' इति भोगभूमीनां सिद्धभूमित्वात् तत्र ब्राह्मण्यादिवतां स्वकर्मकरणस्यास्त्यवकाशः । परं तु भारत इव तत्र अनुष्ठाननियत्यभावात् भारताङ्गकत्वेन यादृशं फलं तादृशं फलं न तत्र लभ्यते ।

**न तत्र विद्यते धर्मो नाधर्मः सम्प्रवर्तते** – वायु ४५–४८
**धर्महानिर्न तेष्वस्ति स्वर्गादागत्य मानवाः ।**
**वर्षेषु तेषु पृथिवीं विहरन्ति परस्परम् ।।** – शिव ५–१८–५७
**धर्माधर्मविशेषश्च न तेष्वस्ति महात्मसु ।**
**अहिंसा सत्यवाक्यं च प्रकृत्यैव हि वर्तते ।।** –वायु – ४४–३७

**भौमानां स्वर्गधर्माणां न पापास्तत्र सन्ति हि** – अग्नि १०९–२९
इत्यादिवाक्यैः तत्र धर्मनियत्यभावं प्रतिपाद्य,
**वर्णाश्रमाचारयुक्ता प्रजास्तेष्वथ सर्वशः ।** – वायु ४४–१९
**ब्रह्मक्षत्रियविट्शूद्रास्तस्मिन् द्वीपे प्रकीर्तिताः ।** – कूर्मे ४९–१०
**तत्र पुण्या जनपदाः चतुर्वर्णसमन्विताः ।** – वायु – ४९–८९
**'वर्णाः स्वकर्मनिरताः'**
**'स्वधर्मेणैव धर्मज्ञास्ते रक्षन्ति परस्परम्'** **भारते – भीष्म– १–११–३९**

इत्यादिवाक्यैः तत्र वर्णाश्रमाचारादिमत्वमपि प्रतिपादितमस्तीति कर्मभूमिवत् विधिनियत्यभावपरत्वमेषां वाक्यानां वक्तव्यं भवति । तथा च तत्प्रदेशानां स्वभावतः सिद्धिभूमित्वात् अनुष्ठातॄणां अधिकारसत्वाच्च जपहोमाद्युपपत्तिर्भवति । पापभूमौ तु नैतस्यावकाशः । न हि जपहोमाद्यधिकारोऽस्तीति पापभूमौ शौचकूपादिप्रदेशे तदनुष्ठानं युज्यते । कृते चानुष्ठाने न केवलं फलाभावः, किन्तु दोषश्च भवति । तद्वत् भरतखण्डातिरिक्त भोगभूमिभिन्नपापभूमिभूतेषु अमेरिकादिष्वपि वर्णाश्रमधर्मानुष्ठानं निष्फलं दोषापादकं चेति ज्ञेयम् । कुबेराधिष्ठिताया विभीषणपालिताया विश्वकर्मकृतदिव्यनगरादिमण्डिताया स्वर्गसदृशभोगभूयिष्ठाया लङ्काया जम्बूद्वीपोपद्वीपत्वात् भारतवर्षभिन्नत्वात् भोगमूमित्वमिति न तत्सादृश्येन भरतखण्डातिरिक्तपापप्रदेशे वर्णाश्रमधर्मावकाश इति दिक् ।

एतेन श्रीमदाचार्यणां हिमवदुत्तरपार्श्वस्थव्यासबदरीगमनवासादि अपि व्याख्यातं भवति । 'अथ हैमवते तटान्तरे' इति मध्वविजयव्याख्यानेषु तटान्तरस्य उत्तरपार्श्वत्वेन व्याख्यातृभिर्वर्णितत्वात्, तस्य च हिमवतः दक्षिणत्वरूपभरतखण्डलक्षणानन्तर्गत्या भोगभूमित्वेऽपि पापभूमित्वाभावाददोष इति । वस्तुतस्तु भारते नारायणदेवस्य आराध्यत्वात्, नारायणाश्रमव्यासाश्रमादीनां भारतान्तर्गतत्वमेवेति न क्षुद्रशङ्काद्यवकाश इति विभावनीयम् । हिमवदुत्तरपार्श्वत्वं तु दृश्यमानहिमवदपेक्षयेति, हिमवद्दक्षिणत्वं तु भारतलक्षणं अदृश्यहिमवदपेक्षयेति, उभयस्मिन्नप्यविरोधक्रमस्य वक्तव्यत्वात् ।

तथा च भूमण्डले भोगभूमिरभोगभूमिरिति द्वैविध्यम् । अभोगभूमौ कर्मभूमिः पापभूमिरिति द्वैविध्यम् । कर्मभूमौ मुनिभिः सेवितत्वादिनिमित्तेन विशेषतः पुण्यभूमित्वं तदभावात्तदभाव इति भूविवेकः । तत्र च भोगभूमयः सर्वा अधुना अदृश्याः । पापभूमिः कर्मभूमिः पुण्यभूमिः तद्भिन्नभूमिश्च दृश्या । पापभूमिः

भरतखण्डातिरिक्ता सर्वा भूः । तस्याश्च स्पर्शमात्रेण कर्मादिनैरपेक्ष्येण पापापादकत्वम् । एवं पुण्यभूमेः भरतखण्डगततीर्थक्षेत्रादीनां स्वसंयोगमात्रेण पुण्यापादकत्वम् । तदतिरिक्तभरतखण्डभागस्य स्वयोगमात्रेण न पुण्य-पापान्यतरापादकत्वमिति विवेकः ।

एतेन पापभूमिं गतानां न केवलं अगम्यगमनरूपनिषिद्धकर्मजन्यपापमात्रं किन्तु स्वर्गापवर्गप्रतिबन्धकदेशप्रयुक्तपापवत्वं चेति, तादृशानां विदेशं गत्वा आगतानां कर्मलोपिनां, तथा भारत एव कर्मलोपवतां पापभूमिस्पर्शरहितानां च बहु वैषम्यं सिद्ध्यति । भारतगतानां कर्मलोपेन पातित्येऽपि न स्वर्गापवर्ग-मार्गच्युतिः । प्रायश्चित्तादिना तत्पापपरिहारानन्तरं तदवकाशात् । विदेशगतानां तु प्रायश्चित्तेन अगम्यगमनरूपनिषिद्धकर्मजन्यपापस्य कर्मलोपप्रयुक्तपापस्य परिहारसम्भवेऽपि, पापदेशसम्पर्कासादितपापस्य निवारणासम्भवात् स्वर्गाप-वर्गमार्गभ्रष्टत्वमेव । स्वकीयानुष्ठानमात्रेण तादृशपापपरिहारसम्भवे बृहदारण्यके वायुदेवेनैव तत्परिहारोक्तेरर्थहीनतापत्तेः।

एतेनैव भारत एव निषिद्धदेशगमनतः भारतातिरिक्तपापभूमिगमनस्य वैलक्षण्य-मपि सुष्ठु विज्ञातं भवति । कलिङ्गादिगमनेन पापसम्भवेऽपि पापदेश-सम्पर्कजन्यस्वर्गापवर्गमार्गार्गळभूतपापस्याप्रसङ्गेन कृतप्रायश्चित्तस्य तस्य पुनः स्वर्गमोक्षाधिकारितानुवृत्तेः । स्वर्गापवर्गप्रतिबन्धकपापप्रक्षेपशालिदुष्टदेश-स्पर्शिनां तु साधनस्य फलं तु पुनर्भारतभूमिजन्मसम्पादनादिकमित्येव वक्तव्यं भवति । अत एव भारतभूमिगतशूद्राद्यपेक्षया निकृष्टावस्था एतेषां पापभूमिगतानां नराणामिति पूर्वं पुरप्रवेशबहिष्कृता भवन्ति स्मैते पातकिन इति प्राचीनाचार-विचारस्मृतिविधुराधुनिकसमाजमध्ये विशेषतः वक्तव्यमस्तीत्यलमनेन प्रसक्तानु-प्रसक्तविचारविस्तारेण ॥

**अत्रापि दीयतां दृष्टिः**

अस्मिन् ग्रन्थे, अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेषु अधिपुण्यमेतत् इति भागवतवाक्यस्य, तथा –

**'विशेषात् भारते पुण्यं चरेयुः पापमप्यथ ।**
**तथैव भगवद्भक्तिं पृथिव्यां नान्यवर्षगाः ॥'**

इति श्रीमदाचार्यवाक्यस्य च परस्परं विमर्शपूर्वकं भावान्वेषणक्रमः हृदयङ्गमः विभावति । अन्यवर्षेषु विष्णुप्रीतिकरसत्यवचनादिधर्मनिमित्तकपुण्यसद्भावेऽपि कर्मण्यदेशाङ्गकनियतवर्णाश्रमधर्मानुष्ठानजन्यपुण्याभावात् अनधिपुण्यत्वं, भारतस्य तु देशानङ्गकैकादशीसत्यवचनादिनिमित्तपुण्यदेशाङ्गकानुष्ठानजन्यपुण्यमिति पुण्याधिक्यमिति उपपादनक्रमः प्राचीनव्याख्यानादितः कण्ठतः अनुपलब्धोऽपि पूर्वापरप्रमाणपरिशीलनलब्धः, एतत्कृतिकर्तृमतिकुशलतां व्यनक्ति । अत्र भरतखण्डे अधिपुण्यत्ववत् अधिपापत्वस्यापि व्याख्याकारप्रतिपादितस्य समन्वयक्रमोऽपि विस्मरणानर्हः सुविचारः । परमत्र पापदेशापेक्षया पुण्यदेशस्य भरतखण्डस्य अधिपापत्वाङ्गीकारः कथं युक्तिसह इति प्रश्नस्य भरतखण्डस्य स्वसमानाधिकरणपुण्यपापयोर्मध्ये पापापेक्षया पुण्याधिक्येन पुण्यदेशत्वेऽपि त्रिविधकर्माकरणादिनिमित्तपापाधिक्यप्रसङ्गेन पापभूम्यपेक्षया अधिपापत्वमिति समाधानमवगन्तव्यम् । एवं पापदेशेऽपि सत्यवचनादिजन्यपुण्यसत्वेऽपि स्वसमाधिकरणपुण्यपापयोर्मध्ये पापाधिक्येन पापप्रक्षेपेण च पापदेशत्वमिति नातिवक्तव्यं सुधियाम् । अत्र कर्मत्रैविध्यं प्रदर्श्य कथितेषु प्रथमतृतीययोः सर्वैरप्यनुष्ठेयत्वेन अङ्गीकृतत्वात् तयोरैक्यसम्भवाद्द्वैविध्यमेवालमिति स्यात् । अथापि कालाङ्गक – देशाङ्गक – उभयानङ्गकत्वेन त्रैविध्यकरणं समञ्जसमिति विभाति ।।

**म्लेच्छदेशेऽशुचौ वापि चक्राङ्को यत्र तिष्ठति ।**
**योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ।।**

इति कृष्णामृतमहार्णवीयवाक्यविमर्शनावसरे, 'योजनत्रयान्तर्गत स्मशानशौचकूपादिष्वपि गमन–वास–देवपूजादेरदोषत्वापत्तिः' इति प्रतिबन्द्यापादनं 'नदी समुद्रगिरयः' इत्यादिप्रमाणसिद्धकर्मण्यदेशेऽपि यद्यपि समानम् । तथापि प्रमाणान्तरानुसारेण प्रसक्तप्रमाणार्थनिष्कर्षः कर्तव्य इति विषयस्य निर्धारणार्थमेवं प्रतिबन्द्यापादनं कृतमिति विभावनीयम् । 'म्लेच्छदेशं न च व्रजेत्' इत्यादिनिषेधवाक्यानि सन्ति । एवं कृष्णामृतार्णववाक्येन, सालिग्रामादिना म्लेच्छदेशस्य वैण्णवक्षेत्रत्वमिति विशेषश्च ज्ञायते । तत्र म्लेच्छावृतप्रदेशस्य वैष्णवक्षेत्रत्वम् । भारतातिरिक्तस्य म्लेच्छदेशस्य तु सर्वथा अगम्यत्वमिति व्यवस्था सम्प्रदायानुसारेणावश्यं स्वीकार्यैव ।

'म्लेच्छावृतान् प्रयत्नेन वर्जयेत् धर्मिको जनः' इति प्रमाणेन म्लेच्छावृतस्य भारतप्रदेशस्यापि वर्जनीयताप्रसङ्गे सालिग्रामसन्निधानेन ग्राह्यतेति स्वरसतः सिद्ध्यति । भारतातिरिक्तम्लेच्छावृतदेशस्य तु सालिग्रामेण वैष्णवक्षेत्रत्वं न प्रसज्यते । तस्य देशस्य वायुदेवप्रक्षिप्तस्वर्गापवर्गप्रतिबन्धकपापभूयिष्ठत्वात् सालिग्रामसत्वेऽपि स्वर्गापवर्गसाधनीभूतकर्मार्हताया दुःस्साध्यत्वात् । वायुदेवकृतपापप्रक्षेपात् पूर्वदेवानां साधनतत्परत्वेन सालिग्रामादिसाहित्येन साधनोन्मुखतायाः स्वारसिकत्वात् तदानीमपि तेषां साधनानुष्ठानासम्भवरूप-परिणामेन सालिग्रामवत्वस्य पापदेशे मुमुक्षूणामकिञ्चित्करत्वमिति विनिश्चितेः । एतेन सालिग्रामराहित्येन म्लेच्छदेशगमनं (पापदेशगमनं) पातित्यापादकम् । सालिग्रामसाहित्येन विदेशगमनं तु न पातित्यसम्पादकमिति वादोऽपि निरस्तो भवति ।

'न यज्ञं तेषु समाचरेत्' इति पापदेशे भगवत्पूजानिषेधात्, सालिग्रामसहित-गमनमपि निषिद्धं भवति । 'चक्राभ्यां सह चक्रं च सदा पूज्यं मुमुक्षुभिः' इति प्रमाणेन सालिग्रामपूजाया अकरणे प्रत्यवायात् , पूजार्थमेव सालिग्रामनयनस्य कार्यत्वात्, पापदेशे पूजाया निषेधे सालिग्रामनयनस्यापि पापादकत्वात् । तस्मात् पूजादिकर्तुं विहिते प्रदेशे निमित्तान्तरेण गमनवासादिप्रतिबन्धे सालिग्रामादिना शुद्धिरत्र विवक्षितेत्येव निश्चेयं भवति ।

नन्वथाप्यत्र व्याख्याकारैः म्लेच्छावृतप्रदेश इत्यर्थाकरणात्, चातुर्वर्ण्य-व्यवस्थारहितदेशस्य म्लेच्छदेशत्वमिति प्रमाणोदाहरणात्, तादृशदेशत्वस्य पापदेशलक्षणत्वात् कथं तत्सङ्गतिरिति चेन्न ।

**चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।**
**तं म्लेच्छदेशं जानीयात् नास्ति कृष्णमृगोऽपि वा ।**

इति व्याख्याकारोदाहृतप्रमाणानुसारेण कृष्णमृगरहितदेशस्यापि म्लेच्छ-देशत्वपरिज्ञानात् तादृशदेशस्य च भारतान्तर्गतदेशस्य सालिग्रामवत्वेन वैष्णवक्षेत्रत्वमिति व्याख्याकाराभिप्रायस्य सुज्ञेयत्वात् । अत एव 'नदीसमुद्रगिरयः आश्रमाश्च वनानि च' इति प्रमाणेन भागवततात्पर्ये कृष्णसाररहितप्रदेशे

सालिग्रामादिना कर्मण्यत्वं वर्णितं सङ्गच्छते। तेषामपि कृष्णसारवत्वे तद्व्यतिरिक्तस्थले कृष्णसारेण कर्मण्यतानिरूपणक्रमस्य अस्वारस्यापत्तेः । परन्त्वत्र नद्यादिसमीपगयोजनमात्रान्तरितदेशस्य शुद्धत्वप्रतिपादनात् सालिग्रामसन्निधानेऽपि तावत्प्रदेशमात्रस्य शुद्धतेति भ्रमनिरासाय कृष्णामृतार्णवे योनत्रयान्तरितदेशपावित्र्यं वर्णितमाचार्यैरिति सर्वं सुष्टुसङ्गतं दृश्यते । तस्मात् कृष्णामृतमहार्णववाक्यमादाय विदेशगमनसमर्थनकुचोद्यादिकं 'नानाजनस्य शुश्रूषे'ति वाक्यं पुरस्कृत्य अधर्मे धर्मतासमर्थनदुराशासदृशमित्युपेक्षणीयं विचक्षणैः ।

एवमस्मिन् प्रबन्धे भारतीयप्रदेशेष्वपि गमनानर्ह–तदपवाद–श्राद्धानर्ह, वासानर्ह–यज्ञानर्हदेशविशेषाणां तत्तन्नामधेयादिग्रहणपूर्वकं विवरणम्, समुद्रयानस्य सार्वकालिकनिषिद्धत्वसमर्थनम्, हनुमत्समुद्रोल्लङ्घनादिविमर्शनं, उदीच्यानां समुद्रयानादेरविगीतत्वस्य सयुक्तिकं खण्डनं, प्रायश्चित्तादिनिरूपणमित्यादयः बहवो विषयाः निपुणतरं चर्चिताः विमर्शकविद्वद्वरहृदयाह्लादकरा राराजन्ते ।

बहुधा तत्तत्प्रमणग्रन्थानयनावलोकनपरामर्शादिबहुपरिश्रमेण, ग्रन्थस्यास्य प्रणेता श्री ताम्रपर्णीश्रीनिवासाचार्योऽयं धन्यः मान्यः अभिनन्दनीयश्च सुजनैः । 'मयोदीरितमेवैतत्सर्वमनेन लिखितमि'ति भाषमाणाश्च सन्त्यनेके स्वयमारोपितमहत्वाः पण्डिताः । सन्तु नाम । न तेन तस्य हानिः । करालेऽस्मिन्नधर्मबहुले कलिकाले धर्माधर्मविचारवार्ताया अप्यवकाशहीने सन्दर्भे प्रचीनार्वाचीनधर्मशास्त्रप्रबन्धसारसम्बन्धेन निबद्धस्यास्य बन्धुरप्रबन्धस्य प्रणयनेन परमानन्दतुन्दिलास्तु निस्संशयमस्मद्गुरुवराः परमपूज्या पण्डितराजजालिहाळाचार्या इति सहर्षमावेदयामः । धर्मे भीमसन्धानां शुद्धभागवतधर्मबद्धादराणां गुरूणामेषामन्तेवासिता नूनं सार्थकीकृतानेन कृतिकृता प्रकृतधर्मविचारप्रबन्धप्रणयनानुगुणधर्माचरणेनेति नातिवक्तव्यमवशिष्यते ।

अन्ते च स्वधर्मं त्यक्त्वा विदेशगमनादिकृतवतां केषाञ्चन पीठाधिपानां परिग्रहणपूर्वकं 'धर्मोपदेष्टार एव धर्ममुल्लङ्घयन्ति' इति 'एतादृशाः विशिष्टपूजादिकर्मसु नाधिकारिण' इति समापनवचनं तु 'नानाजनस्य शुश्रूषा कर्तव्या', 'न कर्मणा न प्रजया' इत्यादिश्रुतिस्मृतिवचसां तदनुगुणशिष्टसम्प्रदायानां च अपार्थापलापकरणपूर्वकमुल्लङ्घितधर्मसेतूनामन्येषां च सन्यासिनां विषयेप्युपलक्षणयान्वितमेव भवेदिति विभावयामः । परमपूज्य श्रीजालीहाळाचार्यगुरोः

रम्या चरणाम्भोरुहस्मृतिः अधर्मे धर्मत्वभ्रमसमर्थनपराणां सर्वेषां दुर्वादानां विनाशनाय एवमेवैतल्लेखकादिलेखनीं व्यापारयन्ती सद्धर्मसाधनं कारयेदिति भगवन्तं प्रार्थयामः । दर्शवर्षतः पूर्वमेव विशिष्य चर्चितोयं विदेशगमनासाधुतादिविचारः इदानीं सम्यगुपनिबद्धः साधून् सन्मार्गगामिनस्तन्वानः फली विलसतात् विमर्शकविद्वत्कुलमनीषाकर्षणत इति समाशास्य, तात्कालिकसमुत्पन्न-स्वानारोग्यवेदानाद्यवस्थायामप्यनादृत्य तत्परिणामं, स्वीयादम्योत्साह-विमर्शनलेखनपाठप्रवचनादिना निरन्तरं स्वगुरुसेवामातन्वतां चिरायुषां श्रीताम्रपर्णीश्रीनिवासाचार्याणां समुपार्जितहरिवायुगर्वनुग्रहाणामपि कर्तव्यतया इतोऽप्यतिशयं पूर्णायुः पूर्णसम्पत्ति पूर्णारोग्यभाग्यादिकं अस्मद्गुरुवर श्रीजालिहाळाचार्यवर्यान्तर्गत श्रीसत्यध्यानतीर्थादिसद्गुरुपरम्परासंसेवितपादार-विन्दश्रीमदानन्दतीर्थवरदः अस्मत्कुलदेवतात्मा श्रीलक्ष्मीवेङ्कटेश्वरः सम्प्रयच्छन्नुत्तरोत्तरमभिवर्धयतु सपरिवारमेतानिति स्वाशीर्वचनैराशास्महे ।

**श्री बाळगारु श्रीनिवासाचार्याः**
**बेङ्गळूरु**

।।श्री गुरुभ्यो नमः ।।

डा. ए.वि. नागसम्पिगे

न्यायवेदान्तादिशास्त्रविचक्षणैः श्रीमद्भिः ताम्रपर्णी श्रीनिवासाचार्यैः विरचितं **'भारतवर्षमेव कर्मक्षेत्रम्'** इति प्रबन्धमवलोक्य मोमुद्यते नश्चेतः । अत्र कर्मभूम्याः महत्त्वं, विदेशस्वरूपं, तत्र वासे अशक्यानुष्ठेयाः प्रायश्चित्तविधयश्च विस्तरेण निरूपिताः । 'धर्मन्यायव्यवस्थायां कारणं बलमेव हि' इति भागवतोक्तिमनुरुध्य धर्माधर्मव्यवस्थेदानीं सङ्ख्याबाहुल्येन धनबलाद् वा निर्णीयमानऽस्तीति दुःखनिदानम् । अथापि धर्मस्वरूपं सुजनैरवगन्तव्यम् । यथाशक्ति विहितमनुष्ठेयं च । तत्वज्ञानार्थं भगवत्तोषाय च विनिर्मितोऽयं निबन्धः समेषामुपकारकः धर्मस्वरूपज्ञापकश्च प्रचकास्तीत्यत्र न विप्रतिपत्तिलेशः । घोरेऽस्मिन् कलियुगे धर्मप्रवक्तारः दुर्लभाः । क्वचिदेव वक्तृसद्भावेऽपि श्रोतारस्त्वतीव दुर्लभाः । न्यायःवेदान्तशास्त्रज्ञैरपि धर्मशास्त्राध्यनम् इदानीं प्रायस्त्यक्तम् । परं ताम्रपर्णीयाचार्यैः धर्मशास्त्रमधीचन्य सारमवमृश्य सङ्ग्रहोऽत्राकारीति विद्वज्जनाः सुजनाश्च तेषामधमर्णाः ।

अत्र क्रियासमभिव्याहारेणानुसन्धेयाः बहवोऽपूर्वाः सन्ति विषयाः । केचनैवोल्लिख्यन्ते -

मार्कण्डेये भारतवर्षे अनुष्ठितकर्मणः पुण्यपापजकत्वम् अन्यत्रानुष्ठितानां पुण्याजनकत्वं श्रूयते-

**भारतं नाम यद्वर्षं दक्षिणेन मयोदितम् ।**
**तत्कर्मभूमिर्नान्यत्र सम्प्राप्तिः पुण्यपापयोः ।।**

अनेनदमुदितं भवति । अहिंसा-सत्यवचनं चेत्यवमादयः प्राणिमात्रानुष्ठेयाः प्रतीयन्ते धर्मशास्त्रेषु । एतादृशकर्मानुष्ठाने भारते विदेशे च पुण्यं जायते । विपरीते उभयत्रापि विपर्ययः । सन्ध्या-जप-देवतार्चनहोमादयः अधिकारिभेदेन भारतवर्ष एव विहिताः । अत्रानुष्ठान एव पुण्यजनकाः । अन्यत्रानुष्ठाने तत्राविधानादेवापुण्यजनका इति विज्ञेयम् । अविहितस्थले वेदोक्तकर्मकरणे प्रत्यवायश्रुतेः ।

मार्कण्डेयपुराणानुसारेणैव नवसाहस्रयोजनात्मिका भारतवर्षस्य इयत्ता निरूपिता । (पत्रम्.५) तथैव आर्यावर्त – मध्यावर्त – ब्रह्मावर्तपदानाम् अर्थविशेषोऽपि निरूपितः (पत्रम्.६७)

तथैवात्र विदेशगमनप्रतिषेधे तत्र बहुकालवासनिषेधे च बृहदारण्यकोपनिषत् प्रमाणत्वेन समुदाहृता । (पत्रम्–९–१०) 'नान्तमियात्' इति वाक्यखण्डेऽत्र म्लेच्छाध्युषित (अवैदिकजनाध्युषित) प्रदेशवासः निराकृतः । तथैव शङ्कराचार्यैः श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणैश्च व्याख्या निबद्धात्रोल्लिखिता ।

आदिपुराणवचनमत्रार्थे समाख्यारूपेण निरवकाशमुल्लिखितं यत्रापुण्यदेशवास एव कृत्स्नपापजनक इति श्रूयते –

**गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते ।**
**न विवाहं न च श्राद्धं यज्ञं तेषु समाचरेत् ।। इति । (पत्रम्.९)**

पवित्रनदीतीरेषु प्रथितक्षेत्रेषु च कर्मानुष्ठानविधायकानि अन्यत्र वासप्रतिषेधपराणि प्रमाणवचनानि अपूर्वाण्युदाहृतानि ।

तीर्थयात्रोद्देशेन अङ्गवङ्गादिप्रदेशगमनमिव समुद्रतरणं भारते तीर्थक्षेत्र-सञ्चारहेतुतया अङ्गीक्रियते । अपि तु अमेरिकादिविदेशगमनार्थं प्रतिषिद्धमेवेति निश्चप्रचम् । विदेशेषु बहुकालवासे प्रायश्चित्तं नोदाहृतमित्यपि न विस्मर्तव्यम् ।

**सकृत् समुद्रयाने हि प्रायश्चित्तमुदाहृतम् ।**
**बहुकालाध्यसने प्रायश्चित्तं न चैव हि ।।**

इति नारदीयवचनमत्रार्थे प्रमाणतयोदाहृतम् ।

'गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते ।' इति वदद्भिः स्मृतिकारैः विदेश-गमनबहुकालवासादि प्रतिषिद्धमिति तत्सन्तानजनैः सैव सरणिरनुसरणीया ।

क्वचिदकर्मभूमावपि स्वाध्यायसन्ध्योपास्त्यादिकं कर्तव्यमिति विधिपराणि ऋषिवचनानि विद्यन्ते । तेषाम् अकर्मभूमावनुष्ठानेन अङ्गवैल्यनिमित्तम् अल्पं फलमपि श्रूयते । तावता कर्मभूमिस्थितानां भारतं जनिमतां तत्र गमनं नाभ्यनुज्ञातं भवति । तत्र जातानाम् अकर्मभूमिवासहेतोः सर्वथा वेदोक्तकर्मानुष्ठानं त्याज्यमिति आशयं निराकुर्वन्ति एतादृशवचनानि विहितकर्मानुष्ठानम् अल्पफलकमपि कर्तव्य-मेवेति प्रतिपादनपराणीति अवगन्तव्यम् । उक्तं च भगवता – 'सदोषमपि न त्यजेत्'

इति । 'व्याजेनापि कृता राजन् न दर्शयति भास्करिम्' इति वदन्तः श्रीमदाचार्याः यथाकथञ्चित् एकादश्याचरणं कर्तव्यमेवेति आदिशन्ति । अत्र व्याजेन कर्मकरणे तात्पर्याभावेऽपि अवश्यकर्तव्यत्वे वाक्यस्य तात्पर्यमस्तीति विभावयन्त्येव सन्तः । तथैवेहापि अकर्मभूमौ जनिमतां तत्र कर्मत्यागो न कार्य इति अल्प-फलकमपि विहितं कर्मानुष्ठेयमिति प्रज्ञापयन्तीमानि वचनानि न पुनः विदेश-गमनवासाभ्यनुज्ञापराणि । बहुबाधस्यान्याय्यत्वात् ।

अनेन प्रबन्धेन सन्तः सन्तुष्यन्तु । खिद्यन्त्वसन्तः । यद्यप्येतादृशप्रबन्ध-लेखनं न बहुमन्यन्ते न स्मरन्ति चादरेण अथापि टीकाकारीयं वचनं समीचीने पथि विचरतां भवत्यनुग्राहकमिति सश्रद्धं स्मारयामः -

**येऽपि सन्ति जनाः सन्तः प्रज्ञासौजन्यशालिनः ।**
**तोषं ते मत्कृतौ यान्ति किमन्यैः पशुसन्निभैः ।।** इति ।

**डा. ए.वि. नागसम्पिगे**
निर्देशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम् , बेङ्गलूरु - २८

## प्राक्कथनम्

पण्डितकेसरि, विद्वान् **राजा. गिरियाचार्यः**
व्यासाश्रमः, मन्त्रालयः

विद्वान् श्री ताम्रपर्णीनीनिवासाचार्याः 'भारतमेव कर्मक्षेत्रम्' (सत्कर्मक्षेत्रनिर्णयः) इति नामकं ग्रन्थमेकं व्यरचयन् । ग्रन्थेऽस्मिन् 'विदेशगमनं निषिद्धम्' इत्यस्य विषयस्य श्रुतिस्मृतिपुराणादिभ्यः अनैकानि प्रमाणानि सङ्गृह्य समीचीनरीतौ ग्रन्थमिमं व्यरचयन् ।

ग्रन्थस्यास्यावलोकनेन विदेशगमनमत्यन्तं निषिद्धम्' इत्ययं विषयः सुस्पष्टं ज्ञायते । ग्रन्थोऽयं चतुराश्रमिणामपि अत्युपयुक्तः । आमूलाग्रं ग्रन्थस्यावलोकनेन विदेशगमनविषये पण्डितपामरादीनां सम्भवनीयाः प्रश्नाः परिहृताः भूत्वा लाभं विना पूर्वाग्रहं सर्वे लभन्तामिति अपेक्षा ।

कालेऽस्मिन् विदेशगमनविषये सम्भवनीयानां सर्वेषां सांयानामुत्तराणि ग्रन्थेनानेन लभ्यन्ते इति सुस्पष्टं सघण्टाघोषं निवेद्यते।

एतद्ग्रन्थकर्तृभ्यः विद्वान् श्रीताम्रपर्णी श्रीनिवासाचार्येभ्यः श्रीहरिवायुगुरुभ्यः इतोऽप्याधिक्येन आरोग्यभाग्यादीन्यनुगृह्य एवं एतादृशानि सत्कार्याणि भवन्त्विति श्रीहरिवायुगुरुषु प्रार्थयामहे ।

अनिवार्ये गुरतरे कार्ये मग्नैरस्माभिः विस्तृतं प्राक्कथनं प्रेषयितुमशक्तैः संक्षिप्य विलिख्य प्रेषयामः ।

**मन्त्रालयः**
**दि- २-१२-२००७**

**डा. चिर्रावूरि श्रीरामशर्मा**
एम्.ए. (तेलगु, संस्कृत)
भाष्यप्रवीणः
साहित्यमीमांसाविद्याप्रवीणः
वेदभाष्यविभूषणः आम्नायवाचक

श्रीमद्भिः तीम्रपर्ण्युपनामकैः श्रीनिवासाचार्यैः पूज्यैर्विद्वदग्रेसरैः लिखितः भारतमेव कर्मक्षेत्रं सत्कर्मक्षेत्रनिर्णयः इति सुदीर्धः व्यासः अवालोकि । यस्मिन् विदेशगमनं समुद्रेवा अन्योपायेन वा समुद्रलङ्घनं दोषाय इति प्राचीनैः सिद्धान्तितमपि पुनरेकवारं प्रमाणसङ्कलनपुरस्सरम् प्रतिपादितम् । विदेशानां तावत् इदानीं वर्तमानानां स्मृतिदृष्टिपरिशीलने नूतनत्वमेव । भारतस्येव प्राचिनता नास्ति । अत एव अमेरिकाइत्यादिदेशान् स्मृतिषु पुराणेषु केनापिनाम्ना उल्लेखनमेव न दृश्यते । तेषां च देशानां जनन कालोऽपि चारित्रिकैः प्रदर्श्यते चेति अधुनिकत्वं निश्च-प्रचमेव । अर्यावर्तस्यैव कर्मभूमित्वं मन्वादिभिः तत्तत्स्मृतिषु विवृतं च । अन्ततो गत्वा सङ्कल्पादौ देशकालद्युच्चारण प्रसङ्गे **'देशकालश्च वक्तव्यः कर्मादौ प्रत्यहं द्विजैः'** इति कर्मादौ देशकालसङ्कीर्तनम् विधाय तत्प्रकार प्रतिपादने च

**जम्बूद्वीपं भारतस्य वर्षं भारत खण्डकम् ।**
**सर्वसाधारणं प्रोक्तम् इदं सङ्कल्प मात्रके ।।**

इति साधारण सङ्कल्पं विधाय पैतृकेषु विशेषं

**यस्मिन् देशे स्थितो मर्त्यः तं देशं स्वगृहावधि ।**
**समुच्चरेत् पैतृकेषु नान्यत्रैवं विदुर्बुधाः ।।**

इति च विधाय तत्प्रकारं च

**'गण्डक्याः अपि गङ्गयाः नर्मदायास्तथैव च ।**
**गोदावर्याश्च कृष्णायाः कावेर्याश्च ततः परम् ।**
**ताम्रपर्ण्याश्च सेतोश्च मध्यभागं पठेद्धि सः।।'**

इति व्यधात् । अन्ते च एतत् सङ्कल्पमुच्यते इति वर्णितेषु एषु भारतेतरदेशानां तत्रत्यनदीनां वा स्मरणमपि नकृतम् । यत्र गोदान, पुत्रदान, कन्यादान, महानदि

स्नानादौ महासङ्कल्पपठनम् विहितम् तत्रापि चतुषष्ठिदेशेषु वा महानदिषु वा पर्वतेषु वा सर्वेभारतीयाः एव स्मर्यन्ते । नत्वितरदेशीयं किमपि । तेनैव स्पष्टं अवगम्यते सङ्कल्पपुरस्सरं विहितेषु कर्मसु अनुपेदेयपञ्चकान्तर्गतः देशः इयानेव नत्वितरः इति । अनुपादेयभूतदेशकालादिनां प्रतिनिधिरपि नाभवितुमर्हति । एवं समुद्र–नौयानगमने अन्ययानगमने वा पक्षकालाधिकरर्णक म्लेछावासः पातकित्वसम्पादकः इति देवलवचनोदाहरणमपि कृतम् ।

**दुर्देशगमने चैव, दुष्टस्त्री सङ्गमेषु च ।**
**समुद्रलङ्घनेचैव नौयानमवलम्भ्य च ।।**

इति नारायणस्मृत्युद्धारे यद्यपि नावासमुद्रोत्तरणम् निषिद्धम् , तथाऽपि दुर्देशगमनस्यापि तद्भन्नतया परिगणितत्वात्, एवं 'द्वीपान्तरगतौ चैव' इति पृथङ्–निर्देशदन्योपायेनापि विदेशगमनं सर्वधा निषिद्धमेवेति ज्ञायते । अपि च अत्र विदेशगमनादौ प्रायश्चित्तमभिधीयते तत् सर्वेषां वर्णानां आश्रमिणां वा कुत केषाञ्चनैवेति विचारे केषाञ्चनैवेति वक्तव्यम् । यतो हि शूद्राणां एतादृशाः निषेधः न भवितुमर्हति । एवं प्रायश्चित्तमपि संन्यासिनां नभवितुमर्हति । अग्न्यादेः तैः परित्यक्तत्वात् इति सोयमपि विशेषः बुद्धौ स्थापनीय इति निवेद्यते ।

एतादृशेषु विषयेषु अलूक्षाधर्मकामास्युः 'यथा ते तत्र वर्तेरन्' इति श्रुतिरपि उदाहरणीया । 'कर्म विचिकित्सा वृत्तविचिकित्सयोः उभयाख्यातेषु च' एतेदृशाचारेषु च समुद्रलङ्घनं द्वीपान्तरगमनं वा न दृश्यते च इति सर्वथा विदेश–गमनं निषिद्धमेव इति सुधीयोविदांकुर्वन्त्विति । व्यासकर्त्रा यद्यपि शास्त्रविरोधः एव प्रतिपादितः । तथापि अनुष्ठातारः अलूक्षाधर्मकामाः इति चेदेव व्यासोऽयं चरितार्थः इति सज्जनाः समनुगृह्णन्तु इति सविनयम् प्रार्थये ।

**चिर्रावूरी श्रीरामशर्मा**

कृष्णः = कृष्णसारमृगः । **आदिपुराणे** च –

**कृष्णसारैः यवैर्दर्भैः चातुर्वर्ण्याश्रमैः तथा ।**

**समृद्धौ धर्मदेशस्तं आश्रयेरन्विपश्चितः ।।**

स्वभावतः इति मनूक्तं सर्वत्राध्याहार्यम् । अन्यथा कृष्णसार-मृगविशेषयवदर्भाणां विदेशेष्वपि बलान्नयनसंभवात् याज्ञियायाज्ञिय देशविभागकरणं निर्बीजं स्यात् । न चेष्टापत्तिः । यज्ञेनैव देशशुद्धौ शुद्धदेशे-यज्ञविधानानुपपत्तेः । तथा चोक्तं **संवर्ते** –

**स्वभावाद्यत्र विचरेत् कृष्णसारः सदा मृग : ।**

**धर्मदेशः स विज्ञेयो द्विजानां धर्मसाधनम् । इति ।**

स्वभावात् अनादितः इत्यर्थः इत्युक्तं स्मृतिचन्द्रिकायाम् । याज्ञवल्क्येऽपि **यस्मिन्देशे मृगः कृष्णः तस्मिन्धर्मान्निबोधत** इत्युक्तम् ।

एतदभिप्रायौ हि शङ्खलिखितौ **देश आर्यो गुणवान् प्रागस्तादर्वागुदया-द्यावदुच्चा गिरयो यावत्पुण्याः सरित प्राक्सिद्धत्वाद्देशः सनातनः पुण्यः । कृष्णमृगो वा यावद्विचरति तावदाचारः स्यात् प्राक्सिन्धु-सौवीरात्, दक्षिणेन हिमवतः, पश्चात्कांपिल्या, उदक्परियात्रात् , अनवद्यं ब्रह्मवर्चसम्** इति । **वसिष्टस्मृता**वपि '**यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसम्**' इति । समुदितं चैतदेव **पैठीनसीस्मृतौ** '**आहिमवतः आ च कुमार्या सिन्धुः वितरिणी सूर्यस्योदयनं पुरः यावद्वा कृष्णमृगो विचरति तत्र धर्मः**' इति । एवं परिमितभारतदेशादतिरिक्तो यो देशः म्लेच्छदेशत्वेन बहूक्तः तत्र स्वभावतः कृष्णसारनामक मृगविशेषः न विचरतीति ऋष्याशयोऽवगम्यते । यत्कचिद्विदेशेषु कृष्णमृगदर्शनं शिष्टदेशस्य म्लेच्छा-क्रमणवत् बलात् प्रकृत्यादिविकोपाद्वा आकस्मिकं इति स न ऋष्युक्त-कृष्णसारः इति वा विवेक्तव्यम् । सर्वज्ञकल्पानां ऋषीणां विदेशेष्वपि कृष्णसारमृगसद्भावः न ज्ञातः इति तु साहसमात्रम् । न च कृष्णसारमृगदर्शनात् सोऽपि ऋषिसम्मत एव देशः न विदेश इति किं न स्यात् इति वाच्यम् । पश्चिमे

सिन्धुनदी, पूर्वे सूर्योदयस्थानभूतकालकवनोपलक्षित : देशः, उत्तरत्र हिमवत्पर्वतः, दक्षिणे पारियात्रपदोपलक्षितकन्याकुमारीक्षेत्रं इति सीमावचनस्य लक्षणान्तरस्य च सद्भावात् तद्विरोधापत्तेः । न हि वैभवादनेकलक्षणोक्तौ अन्यतमस्य वैयर्थ्यमापादनीयम् । कृष्णसारमृगलक्षणं तु अभिज्ञैर्ज्ञातव्यम् । वैतरिणी – जनकपर्वतसमीपे मालवदेशे परशुरामेण धनुष्कोट्या कुण्डं भित्वा निर्मिता नदी इति प्रसिद्धिः । एवमेव वीरमित्रोदये व्याख्यातम् ।

लक्षणान्तराभिधानं च दृश्यते । तथाहि '**कृष्णसारैर्यवैर्दर्भैः चातुर्वर्ण्याश्रमैः तथा**' इति आदिपुराणोक्तरीत्या चतुर्वर्णाचतुराश्रमविधि-नियमव्यवस्था यस्मिन्देशे पारंपर्यक्रमागता स्वाभाविकी ऋषिमुनिसाधुभिः अनुष्ठिता इति प्रथा च वेदेतिहासपुराणादिप्रमाणैरुपलभ्यते स देशः शिष्टदेशः इति तदर्थः । अत एव **विष्णुस्मृतौ 'चातुर्वर्ण्यव्यवस्थानं यत्र देशे नविद्यते । तं म्लेच्छदेशं जानीयात् आर्यावर्तमतः परम्'** इति म्लेच्छदेशव्यावृत्ततया पुण्यदेशनिर्देशः कृतः। अद्यापि वर्णाश्रमव्यवस्था अस्मद्भारते देशे एव उपलभ्यते । यद्यपि बहुप्रतिरोधात् इहापि सा क्षीणा तथापि तदङ्गीकर्तृसाधुजना तत्प्रमाणसंमानिनः यथा शक्तितदनुष्ठातारोऽस्मिन्देशे दरीदृश्यन्ते नान्यत्र । ते म्लेच्छादयः खलु धर्ममूलं वेदादि अप्रमाणं मन्वते । सत्येवं का कथा विदेशेषु तादृशव्यवस्थासद्भावस्य ?

एतद्भारतदेशात् अन्यः प्रत्यन्तदेशः समुद्रस्य परे पारे स्थिताः देशा समुद्रमध्यस्थिता द्वीपाश्च विदेशाः । **स ज्ञेयो याज्ञियो देशः म्लेच्छदेशस्ततः परः** इतिमनूक्तेः । स्वस्ववर्णाश्रमोचितधर्मानुष्ठानपूर्वं भक्त्या भगवदाराधानं हि यज्ञः ईदृशयज्ञार्हो देशः याज्ञियः । तदन्यः म्लेच्छदेशः । अयाज्ञियः अर्थात् भगवत्पूजारूपयज्ञानर्हः वषट्कारादियुक्तश्चात्र यज्ञशब्दवाच्यः ब्राह्मणादि-वर्णाधिकारिकः इत्यर्थः । तत्र वर्णाश्रमोचितकर्म कर्तुं तत्र स्थिताः इतो गताश्च नार्हन्ति इति भावः । अत एवेमे पापदेशा इत्येवोद्घोषिताः ।।

तदुक्तम् –

**पापदेशाश्च ये केचिद्व्याधैरध्युषिता जनैः ।**

**गत्वा देशानपुण्यांस्तु कृच्छ्रं पापं समश्नुते ।।**

**न विवाहं न च श्राद्धं यज्ञं तेषु समाचरेत् ।**

इति **आदिपुराणे** ८४ अध्याये। **व्याधैः** = किरातैः चैनादिपूर्वोत्तर-पूर्वदेशीयाः किराताः। तत्र गमनमात्रेण पापश्रवणात् अयं नित्यनिषेधः। अयं निषेधः भारतदेशव्यतिरिक्तविषयः । विवाहः संस्कारः । श्राद्धं नित्यम् । यज्ञः काम्यः इति वर्णाश्रमोचितकर्मसु त्रिविधमपि कर्म विदेशेषु न कर्तव्यम् । तत्पदानामुपलक्षकत्वात् । भारतेऽपि केचन देशाः अगम्याः इत्याहुः। अन्तप्रदेशोऽपि न गम्यः । तथाहि – **'सिन्धुसौवीरसौराष्ट्रान्तथा प्रत्यन्तवासिनः कलिङ्गकोङ्कणान् वङ्गान् गत्वा संस्कारमर्हति'** इति **देवलस्मृतिः** । अत्र हि क्वचित्तीर्थयात्रोद्देशं विना गमने पुनःसंस्कारः प्रायश्चित्ततयाऽभिहितः । न तु भारताद्बहिर्गमने । अत एव व्याधैरध्युषिता इति पापदेशा विशेषिताः ।

तेषां देशानां पापत्वे अपुण्यत्वे हेतुमभिधाय तद्गमनं निषिद्धं बृहदारण्यके ।। तथाहि –

## (उपनिषद्विचारः)

**सा वा एषा देवता एतासां देवतानां पाप्मानं मृत्युं अपहृत्य यत्रासां दिशामन्तः तद्गमयांचकार । तदासां पाप्मनो विन्यधात् । तस्मान्न जनमियात् नान्तमियात् । नेत् पाप्मानं मृत्युमन्ववायानीति। तृतीयाध्याये–१० ।।**

**सावा एषा देवता**= पूर्वोक्तः मुख्यप्राणः वायुः । **एतासां देवतानां** = रुद्रादिदेवानां **पाप्मानं मृत्युं** = पातकं पापं तथा मृत्युं मृत्युपदोपलक्षितं तमः प्राप्तिहेतुं च। **यत्रासां** दिशामन्तः **तद्गमयांचकार**= यस्मिन्देशे एतद्दिगन्तता व्यवहारः तादृशसमुद्रप्रान्तपर्वताद्यरण्यप्रदेशेषु प्रापयामास **तदासां पाप्मनो विन्यधात्** = प्रान्ततद्बहिर्देशस्य जनतानां उपरि पापानि प्राक्षिपत् । **तस्मात्**=

कर्मभूमिव्यतिरिक्ततादृशप्रान्तदेशेषु पापानां मृत्योश्च सद्भावात् प्रक्षिप्तत्वात्। **न जनमियात्** = तादृशपापिष्ठजनं प्रति न गच्छेत् । तज्जनसंपर्कं न कुर्यात् इति यावत्। **नान्तमियात्** = तद्देशं प्रति न गच्छेत् । **नेत्** =तज्जनदेश संसर्गे कृते पाप्मानं मृत्युं अन्ववायानीति गन्ता संपृक्ता एवं चिन्तयेत् । तज्जनदेशसंसर्गे कृते पाप्मानं मृत्युं प्राप्नवानीति बुद्ध्या नेयादेत्यर्थः । तत्र गतौ पापान्वयः स्यात् इति भावः । अत्र यद्यपि अयमेव देश दिगन्तः इति नास्ति स्पष्टनिर्देशः। तथापि प्रमाणान्तराद्यनुसृत्य तस्य भारतदेश व्यतिरिक्त जन वासदेशत्वं निश्चेतुं शक्यते । यत ईदृशदेशे, देशीयेषु च पापं मृत्युश्च निक्षिप्तौ । न हि देशे पाप निक्षेपः देशस्य दुःखादि फलसंसर्गार्थं जडत्वात्। किन्तु तद्गतानां, इतः तत्र गतानां च । तद्गतानां साक्षादेव पापनिक्षेपात्, इतस्तत्र गच्छतां दुःखादिफलसंसर्गार्थं हि देशे पापनिक्षेपः परिशिष्यते । अत एव नान्तमियात् इत्युक्तं संगच्छते । अन्यथा नात्र तिष्ठेत् इत्यवक्ष्यत् । तादृशजनानां पुण्य देशगमनेऽपि पापसम्बन्धापरिहाराच्च । प्रत्यागमनेन पापदेशत्यागेन पापनिवृत्तौ प्रत्यवयोपदेशः व्यर्थः स्यात् । अन्यथा दुष्कर्मपरित्यागमात्रेण पापनिवृत्तिरित्यपि स्यात् ।।

ननु कोऽयं दिशां अन्तः? उच्यते, यत्र सनातनवैदिकधर्मवर्णाश्रमव्यवस्था अनादितः दृश्यते सा दिक् तद्भिन्नो दिशामन्तः । अन्यथा दिशामन्तस्यैवाभावेन तत्र पापक्षेपणस्य असंभवात् अयुक्तं स्याद्वचनम् । अतो यावती दिक् स्वधर्मसाधनं तावत्या दिश अर्थाद्देशतो व्यतिरिक्तो दिगन्तः । दिशां अन्तः दिगन्तः इति श्रौतो भावः विभाव्यते। इममेव भावं मनसि निधाय समुद्रप्रान्तो यत्र इति व्याख्यातं खण्डार्थकृद्भिः । ययोः देशयोः विभाजकः समुद्रः स परो देशः यत्पदाभिधेयो गृहीतः । अत एव प्राणिसञ्चारानुकूलत्वेन दिग्व्यख्यानं कृतं सङ्गच्छते । अन्यथा समुद्रतीरपर्यन्तमपि प्राणिसञ्चारस्य शक्यत्वात् समुद्रे इत्येव अवक्ष्यत् । भारतीयसमुद्रतीरस्य शिष्टपरिगृहीतत्वेन तद्विरोधापत्तेः नैतत् तीरपरिग्रहसंभवः । रामेश्वरकन्याकुमार्यादिबहुपुण्यक्षेत्राणां अत्रैव सद्भावात्।

परदेशे यद्यपि यत्किंचित्प्राणिसञ्चारो दृश्यते तथापि श्रुतेरुपदिश्यमानैतद्देशीय जनसंबन्धिप्राणिसञ्चारस्य समुद्रावधित्वस्य विवक्षितत्वात् । अन्यथा यत्र समुद्रप्रान्तः इति नावक्ष्यत् ॥

बृहदारण्यक**शाङ्करभाष्ये**ऽपि इदं विचारितम् । तथाहि – **ननु नास्ति दिशामन्तः कथमन्तं गमितवानिति । उच्यते । श्रौतविज्ञानवज्जनावधि-निमित्त कल्पितत्वाद्दिशां, तद्विरोधिजनाध्युषित एव देशः दिशामन्तः देशान्तोऽरण्यमिति यद्वदित्यदोषः । तस्मादन्त्यं जनं नेयात् न गच्छेत् संभाषणदर्शनादिभिर्न संसृजेत् । तत्संसर्गे पाप्मना संसर्गः कृतः स्यात् पाप्माश्रयो हि सः । तज्जननिवासं चान्तं दिगन्तशब्दवाच्यं नेयाज्जन शून्यमपि । जनमपि तद्देशवियुक्तमित्यभिप्रायः । नेत् परिभयार्थे निपातः । इत्थं जनसंसर्गे दिगन्तदेशगमने पाप्मानं मृत्युमन्ववायानीति । अनु अव अयानि इत्यनुगच्छेयमित्येवं भीतो न जनं अन्तं च ईयात् इति पूर्वेण संबन्धः इति ॥**

तथाच श्रौतविज्ञानपदोपलक्षितशिष्टाचारपरंपरा यद्देशीयजनेषु स्वतो दृश्यते स देशः दिक्शब्दाभिधेयः। परोपदेशाद्बलाद्वाअन्त्यजनानामपि वैदिक-सदाचारसंभवात् स्वत इत्युक्तं। अन्यथा देशविभागो विवेको वा जनेषु निर्युक्तिकः स्यात् । इदं चाद्यापि प्रत्यक्षम् । तथाच नित्योऽयं निषेधः । हेतोः प्रत्यवायस्य च श्रवणात् । देवताः पापाद्विमुच्य वायुः तं पापसमुदायं दिगन्तशब्दवाच्ये देशे यतः प्राक्षिपत् अतः स देशः पापदेशः तज्जनाश्च तद्देशजन्यादिमत्वात् पापाः इति हेतुरुक्तः । पापदेशेन पापजनेन च संसर्गः पापजनकइति स्वरसतः सिद्धेः तन्निषेधः अर्थवान् । एवं मृत्युप्रक्षेपस्य श्रवणात् तद्देशदेशीयजनसंसर्गे मृत्युप्राप्तिरूपप्रत्यवायस्यापि सत्वं अनुसन्धेयम् । मृत्युशब्दश्चेह न मरणवाची किन्तु नरकाद्यनर्थवाची इति ज्ञेयम्। तथानुपलंभात् (तद्देशीयानां अमरणात् )

इयमेवोपनिषत् **रङ्गरामानुजेन** किञ्चिदिव व्यत्यस्य व्याख्याता । तथाहि

**यस्मात् कारणात् प्रत्यन्तदेशानां वागादिदेवताविनिमुक्तानृतादिलक्षण-पापनिधानाश्रयतया म्लेच्छदेशत्वं , अत एव तत्र जनं =जननं उत्पत्तिं अन्तं =मरणं च नेयात् न प्राप्नुयात् । तत्र देशे उत्पत्तिमरणे अशोभने इति यावत्** इति ।।

अस्मिन्व्याख्याने दिगन्तशब्देन म्लेच्छदेशः स्वीकृतः। परं तु जनशब्दस्य मनुष्यपरत्वेऽरुचिं मन्वानेन जननपरत्वं उक्तम् । जननं चोत्पत्तिः । अतः उत्पत्तिं नेयान्न प्राप्नुयात् इत्यर्थः इत्यभिहितम् । उत्पत्तेः उत्पत्स्यमानानधीनत्वेन नेयात् इत्येषः न निषेधविधिः किन्तु उत्पत्तिः पापफलदा इति वस्तुस्थितिकथनं इत्यङ्गीकर्तव्यं भवति । इदं नोपपद्यते । नेत् इत्युत्तरवाक्यस्यान्वयानुपपत्तेः । तत्र म्लेच्छदेशे मरणनिवृत्यर्थं तत्स्थेन देशान्तरं गच्छेत् इत्यत्रास्य तात्पर्यं वक्तव्यम्। उत्पत्तेरनधीनत्वेऽपि मरणनिवृत्तेः शक्यसंभवात्। अतः पुण्य-देशोत्पत्तिमता अयं पापः म्लेच्छदेशो न गन्तव्यः न तत्र स्थातव्यं नापि तत्र म्रियेत इत्यर्थ एव आश्रयणीयः । ततश्च यः पुरुषः पुण्यदेशोत्पत्तिमान् ततः पापदेशं गच्छति स पापं प्रत्यवायं अन्वेतीति फलितोऽर्थः ।।

ननु दिगन्तत्वेनोक्तम्लेच्छदेश इयानिति कथं निर्णयः ? उच्यते । दिगन्तः खलु प्रक्षिप्तपापः यः स्वं प्रत्यागतस्य पापान्वयं करोति । तद्भिन्नो देशः पुण्यदेशः यतो जनः पापं देशं नेयात् देशस्य पुण्यत्वं तत्र कृतकर्मणां पुण्य-प्रदत्वेन । तच्च कर्मणां श्रुत्यादिविहितत्वेन एव । तच्च श्रुत्याधिकारिसापेक्षम् । अधिकारी च स एव यः स्वतो द्विजः संस्कारक्रमसंपन्नः। एवं चोपनयनादिसंस्कारसंस्कृत-द्विजोद्देशेन विहितकर्मणां क्लृप्तपुण्यादिफलहेतुत्वं यद्देशावच्छिन्नानुष्ठानेन भवति स देशः पुण्यदेशः इति पर्यवसितार्थः आस्थेयः । तथा च श्रुतितदध्ययन-तदर्थविज्ञान, तदुक्त विहितकर्मानुष्ठानादिपरंपरा स्वतो यद्देशीया स देशः पुण्यः इति निष्पन्नम् तद्भिन्नो देशः दिगन्तः पापः इति चोच्यते । अतः एवोक्तं **कृष्णसारैः मृगैःदर्भैः चातुर्वर्ण्याश्रमैःतथा इति शिष्टदेशः। चातुर्वर्ण्यव्यवस्थानं यत्र देशे न विद्यते। तं म्लेच्छदेशं**

**जानीयात्** इति म्लेच्छदेशः । तद्देशं प्रति नेयात् इति निषेधस्य सहेतुकत्वं उक्तं भवति । तादृशदेशानां स्वतः पापत्वेन पापहेतुत्वेन उक्त परंपराद्यभावात् वर्णाश्रमोचितकर्मानुष्ठानायोग्यत्वाच्च अगम्यत्वं स्फुटम् । तत्र गमने कर्मलोपात्, पातित्यादिप्रसङ्ग इति सिद्धम् ।।

ननु तद्देशगमननिषेधस्य पापसंबन्धहेतुकत्वेऽपि कर्मलोपपातित्यादि कथम्? इति चेत्, उच्यते । देशः खलु धर्माङ्गत्वेन शास्त्रेषु प्रतिपादितः । यदि सर्वोऽपि देशः धर्माङ्गं भवितुमर्हति तर्हि पुण्यपापत्वेन देशविभागो व्यर्थः स्यात् । अतः देशस्य पापत्वं तस्य धर्मानङ्गत्वे हेतुरिति एष्टव्यम् । ततश्च पापदेशानुष्ठितकर्मणा न धर्मेदयः इति सिद्ध्यति । एवं च तत्रानुष्ठितमपि अननुष्ठितप्रायम् अफलत्वादिति कर्मलोपः । सत्येवं कर्माभावात् तदवलम्बिब्राह्मण्यादि अनवस्थितं इति पुरुषस्य पातित्यं इत्याशयः । तथा च **मार्कण्डेयपुराणे** अयमाशयः व्यक्तः । तथाहि –

**यदेतद्भवता प्रोक्तं कर्म नान्यत्र पुण्यदं ।**
**पापाय वा महाभागः वर्जयित्वा तु भारतम् ।।**
**इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते ।**
**न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।।**
**तस्माद्विस्तरशो ब्रह्मन्मम तद्भारतं वद** । इति

कर्मभूमिः भारतं तदन्यत्र भूमौ कर्म न विधीयते इत्यस्य भारतव्यतिरिक्ता भूमिः न शास्त्रविहितकर्मानुष्ठानाङ्गं इत्यर्थः । तथा च तत्रानुष्ठितं कर्म न पुण्यप्रदम्, अतो नानुष्ठेयं तत्र कर्म। यदि मोहादनुष्ठीयते तर्हि पापमेव भवति इति तदर्थः। तादृशदेशस्यैव पापदेशत्वात्। न हि पापदेशीयकर्मणा पुण्योदयसंभवः युज्यते ।

ननु क इमे पुण्यपापे ? ये म्लेच्छदेशे न भवतः इत्युच्यते । सामान्ये उत विशेषः ? नाद्य : सर्वमानुषसाधारणस्य विधिनिषेधवचनस्य अयुक्तता– पातात् ।

**ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भर्तृमती तथा ।।**
**अभर्तृका तथाऽन्ये वा सूतवैदेहिकादयः ।**
**एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि** । इति ।।

**– कृष्णामृत महार्णवे १५५,१५६ श्लोकयोः**

श्रीमदाचार्यैः एकादश्युपवासस्य सर्वमनुष्याधिकारिकत्वोक्तेः तदकरणे प्रत्यवायश्रवणात् श्वपचचण्डालम्लेच्छयवनादिभिरपि एकादश्यादीनां अवश्यअनुष्ठेयत्वात् । तथा च अनुष्ठिते पुण्यं अननुष्ठाने च पापमिति अवश्यं अभ्युपगन्तव्यम्। किञ्च अनृतवचनाद्यर्थं अभ्यनुज्ञा स्यादन्यथा । अतः सत्यवचनादिना पुण्यम् अनृतचौर्यादिना पापं चाङ्गीकर्तव्यम् । न द्वितीयः तथा प्रमाणाभावात् इति चेन्मैवम् । '**वर्णाश्रमव्यवस्थानं यत्र देशे न वर्तते । स म्लेच्छदेशः विज्ञेयो ह्यार्यावर्तं अतः परम्**' **इति** केवलं वर्णाश्रम-धर्माभावनिमित्तं म्लेच्छदेशत्वं वर्णाश्रमधर्मव्यवस्थानिमित्तं पुण्यदेशत्वं इति विशेषपुण्यपापसंबन्धस्यैव विदेशेषु निषेधस्य प्रमाणत अवगमात् ।।

ननु कृष्णमृगचरणेनापि पुण्यदेशत्वनिर्णयात् तस्यापि पुण्याङ्गत्वं स्यादिति चेन्न । सामान्यतो लक्षणाभिधानपरत्वात्तद्वाक्यस्य । अवश्यं चैवम्। वर्णाश्रमावलंबिधर्मवत् कृष्णसारावलम्बिनो धर्मस्याभावात् । स्यादपि स धर्मः नानुष्ठेयो भवति विदेशेषु ।।

तथा च वर्णाश्रमोचितनित्यनैमित्तिककर्मणां अनर्हत्वाद्विदेशानां ब्राह्मणादीनां तत्र गमने कर्मलोपात् पातित्यं भवति इति सिद्धम् ।।

**किञ्च –**

**अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेषु अधिपुण्यमेतत् ।**
**गायन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवन्ति ।।**

(**भागवते पञ्चमस्कन्धे,६–१४**)भारतदेशमहिमाऽत्रोपवर्णितः । अस्यार्थः सप्तसमुद्रवत्याः भुवः मध्ये सप्तद्वीपेषु जंबुद्वीपे विद्यमानेषु नववर्षेषु एतत्

भारताख्यं वर्षं **अधिपुण्यं** = अधिकपुण्यसाधनम् । यत्रत्यजनाः मुरारेः श्रीकृष्णस्य अवतारयुक्तानि **भद्राणि** = श्रवणमात्रेण मङ्गलकराणि **कर्माणि** = भगवच्चरितानि **गायन्ति** = स्तुवन्ति । अहो एतत् अधिकपुण्यप्रदमिति ।।

ननु यदि भारतवर्षं अधिकपुण्यं तर्हि इतरवर्षाणि कथंभूतानि ? अधिकपापानि इति स्वरसतः प्राप्तम्। नेत्याह भाष्यकारः **तात्पर्यनिर्णये** इति ।।

**विशेषाद्भारते पुण्यं चरेयुः पापमप्यथ ।**
**तथैव भगवद्भक्तिं पृथिव्यां नान्यवर्षगाः ।।** **इति ब्रह्माण्डे**

**नान्यवर्षगाः** इत्युक्तत्वेन चरेयुरिति अध्याहृतभारतवर्षगाः इत्यनेन संबध्यते। तथा च एतद्भारतवर्षगाः जनाः अत्र भारते विशेषात् पुण्यं चरेयुः । अथ इति विशेषात् पापमपि चरेयुः। यथा अधिकपुण्यं पापं च चरेयुः तथा भगवद्भक्तिं चरेयुः। पृथिव्यां अन्यवर्षगाः तु नैवमधिकपुण्यं वाऽधिकपापं वा भगवद्भक्तिं वा चरेयुः इत्यन्वयः। अत्र श्रीमदाचार्याणां कः आशयः इति अस्ति सन्देहः। १. भारते अधिकपुण्यपापोक्तेः अन्यवर्षेषु सामन्ये(अल्पे) पुण्यपापे इति वा, २. अत्र अधिकपुण्यपापे अन्यत्र तु केवलं पापं इति वा, ३. विशेषादित्यस्य पुण्यचरणमात्रान्वयेन भारते कृतपुण्यकर्मणः अधिकपुण्यं, पापमल्पं इतरत्र तु पापदेशत्वेन अधिकपापं, पुण्यं अल्पं इति वा। ४. अथवा भारते अधिक पुण्यपापे इतरत्र पुण्यमेव न पापं इति ।।

तत्र द्वितीयपक्षे बुद्धिपूर्वकसत्यवचनादरणादेः साधारणधर्मत्वानुपपत्तिः पापदेशे पापमल्पं पुण्यदेशे पापमधिकमिति युक्तिविरोधः दोषः । चतुर्थपक्षे इतरवर्षाणां कर्मभूमित्वे पापाभावायोगः अकर्मभूमित्वे पुण्यस्यायोगः, भारतस्य अपेक्षया तेषामेव उत्तमत्वापत्तिः दोषः । तृतीयपक्षे येषां कर्मणां देशो नाङ्गं तेषां भक्त्यादिपरिकरमनन्तर्भाव्य फलव्यत्यासकल्पनस्य निर्बीजत्वापत्तिः दोषः। प्रथमपक्षेऽपि भारतदेशापेक्षया अन्यवर्षेषु पापस्याल्पत्वे तद्देशजन्मन एव गरीयस्त्वापत्तिः दोषः । अतः प्रमाणान्तरमनुसृत्य किञ्चिदाकूतं कल्प्यम् ।।

तथाहि कर्माणि त्रिविधानि । विष्णुप्रीत्यर्थं अनुष्ठेयत्वेन विहितानि नित्यानि वैष्णवकर्माणि एकादशीउपोषणचातुर्मास्यादीनि प्रथमानि । वर्णाश्रम विभागशः विहितानि सन्ध्यावन्दनब्रह्मयज्ञादिकर्माणि द्वितीयानि। तृतीयानि सत्यवचन आर्जवत्वसाधुत्वशौचादिकर्माणि । कन्यादानादीनि अनियतान्यपि वैयक्तिकानि । तत्र प्रथमतृतीयानि सर्वदेशकालादिषु सर्वैरपि अनुष्ठेयानि नित्यनि नैमित्तिकानि च । कृते पुण्यावहानि अकृते प्रत्यवायवन्ति तत्र द्वितीयानि न सर्वाधिकारिकाणि। वर्णाश्रमभेदेन व्यवस्थापितानि येषां देशः काल-श्चाङ्गम् । अत्र तु स्वभावतः वर्णाश्रमिणः संस्कारादिक्रमसंपन्नाः वर्णाश्रमानुसारं स्वोचितं कर्मानुष्ठातुं अधिकारिणः । ततश्च भारतदेशादन्यस्मिन् देशे स्वभावतः वर्णाश्रमव्यवस्थायाः अभावात् तत्स्थाः म्लेच्छादयः अत्र नाधिकारिणः। भारतेऽपि चतुर्वर्णबहिर्भूताः चण्डालादयः पतिता वाऽपि नाधिकारिणः। प्रथम तृतीयप्रकारयोः तु सर्वकालदेशेषु कर्तुं योग्यत्वात् तत्करणे देशो कालो वा न नियतः। अतः सर्वेऽपि म्लेच्छादयः सर्वत्र देशकालयोः प्रथमतृतीयप्रकारक-र्माधिकारिणः यथायोग्यं इति ज्ञेयम्। एवं सति त्रिविधकर्मणामप्यनुष्ठाने ब्राह्मणादीनां पुण्याधिक्यस्य, तथा अननुष्ठाने पापाधिक्यस्य च भारतेऽस्त्यव-काशः। देशान्तरे तु वर्णाश्रमानुष्ठानाभावात् न पुण्याधिक्यम्, नापि तदननुष्ठान-निमित्तं पापाधिक्यं वा इति युक्तं उक्तं विशेषाद्भारते पुण्यं पापमपि इति श्रीम दाचार्यैः। अद्यत्वे विदेशेषु पापाधिक्यस्य पुण्याल्पत्वस्य च प्रतीतिः विहितस्य साधारणस्याप्यननुष्ठानेन तथा निषिद्धबहुलाचरणेन चेति विभाव्याः । द्वितीयचतुर्थव्याख्याने तु टिप्पणीकृदादृते इति उक्तदोषनिवृत्यर्थं वर्णाश्रमधर्मजन्यपुण्यपरतयैव उन्नेये ।।

तथाचोक्तं ८-२ **विष्णुस्मृत्यादौ 'न म्लेच्छविषयं गच्छेत्'**

**म्लेच्छदेशं न च व्रजेत्** इति शंखस्मृतिः साधु संगच्छते। स च परिष्कृतः तत्रैव **चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते। स म्लेच्छदेशो विज्ञेयः आर्यावर्तः ततः परः। विष्णुस्मृति** ८४.४ इति एतेन ब्राह्मणादिभिः विदेशेषु

गत्वा चातुर्वर्ण्यव्यवस्थापनं कृतं चेत् देशास्ते न म्लेच्छदेशा इति किं न स्यादिति क्षुद्रोपद्रवोऽपि निरस्तः। गमनस्यैव निषिद्धत्वात्। गमने तु पतितास्युः ते यतः नित्यवर्णाश्रमकर्मणां अनर्हाः।

अपि च पुण्यदेशाश्रयणनियममाह **मनुः**।

**आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।**
**तयोरेवान्तरं गिर्योः आर्यावर्तं विदुर्बुधाः॥**
**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।**
**स ज्ञेयो याज्ञियो देशः म्लेच्छदेशस्त्वतः परः।**
**एतान् द्विजातयो देशान् संश्रयेरन्प्रयत्नतः।** इति।

संश्रयेरन् इति इह विधिः। देशाश्रयस्य अवर्जनीयत्वेन स्वतः प्राप्तत्वेन नायं अपूर्वः येनोक्तलक्षणहीनदेशाश्रयणं न निषिध्येत। किन्तु अन्यतराश्रयणे तदन्यस्याप्राप्तत्वेन पाक्षिकाप्राप्तौ अप्राप्तांशोऽत्र विधीयते ततश्चास्य विधेः यत्कि ञ्चिद्देशाश्रयणस्य स्वरसत्वेन यदि उपनयनादिसंस्कारसंस्कृतः वर्णा-श्रमोचित कर्माधिकारी द्विजशब्दोक्तः वसति तर्हि एष्वेव देशेषु वसेत् नान्यत्र इत्यर्थः। **'गत्वा देशानपुण्यांस्तु कृच्छ्रं पापं समश्नुते'** इति **'म्लेच्छावासः तथा पक्षं यो वर्तेत स पातकी'** इति च वचनान्तरे प्रत्यवायश्रवणात् भवत्ययं नित्यविधिः। अत्र द्विजातिपदश्रवणं चातुर्वर्ण्यव्यवस्थानस्य निमित्तताश्रयणं सामान्यधर्माणां देशाङ्गकत्वाभावः, अस्य विधेः वर्णा-श्रमोचितकर्माङ्गदेशाश्रयण विषयकत्वं उररीकुर्वन्ति। साधारणधर्माणां सर्वदेशकालेषु सर्वाधिकारिकत्वात् विशिष्य पुण्यदेशविभागः तथा तदाश्रयणविधिश्च वर्णाश्रमधर्माणामेव देशकालाङ्गकत्वं निश्चिनुतः। अन्यथा तयोः वैयर्थ्यापत्तेः। देशस्य सर्वधर्माङ्गत्वाङ्गीकारे तु कर्मभूमिव्यतिरिक्तदेशेषु न किञ्चिदपि पुण्यमिति स्यात्। एवं हि भगवानाह **भागवते (एकादशस्कन्धे)**

**स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः।**
**विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः**।(११-२१-२)इत्युक्त्वा,

**देशकालादिभावानां वचनान्मम सत्तम ।**

**गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ।** (११-२१-७)

**कृष्णसारोऽथ देशानां ब्राह्मणानां शुचिर्भवेत् ।**

**कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणः ।**(११-२१-८)इति च निरूप्य । **शक्त्याऽशक्त्या च वाग्बुद्ध्या समृद्ध्या च तथाऽऽत्मनः ।।**

**अन्ये शुद्ध्यन्ति हि तथा देशावस्थानुसारतः** । इति

देशस्य शुद्ध्यनुसारं हि अधिकारिकृतकर्मणां साद्गुण्यं इति निरूपितं दृश्यते। कृष्णसारः(अर्शआद्यच्) = कृष्णसारमृगाः सन्त्यस्मिन् इति कृष्णसारः कृष्णसारमृगविशिष्टो देशः इत्यर्थः । देशानां मध्ये कृष्णसाराध्युषितो देशः ब्राह्मणानां शुचिर्भवेत् । कृष्णसारमृगसञ्चारविशिष्टोऽपि सौवीरकीकट असंस्कृतईरिणाख्यदेशाः न शुचयः। तेषां स्वतो दुष्टत्वात्। तथा चायं प्रघट्टिकार्थः । स्वोचितकर्मानुष्ठानदीक्षावान् साधकः देशकालोपायादिशुध्य-शुध्योः गुणानुसारं नियतकर्मणां विहितक्रमं अनुसृत्य अनुष्ठाता भवेत् । देशकालद्रव्योपायशुद्ध्यशुद्ध्योः श्रीकृष्णवचनमेव प्रमाणम् । भारतदेशीय-कृष्णसारमृगसञ्चारयोग्यः सौवीर(पाकिस्तान) कीकट(समुद्रप्रान्तः-तथा तन्मध्यवर्तिद्वीपान्तरभूप्रदेशः) असंस्कृतः( वैदिकनीतिनियमादिरहितवर्णा-श्रमव्यवस्थारूपसंस्काररहितः) असंस्कृतजनमात्राधिष्ठितः, ईरिण = (ऊषर-भूमिः) तद्व्यतिरिक्तः देशः शुद्धः । एवं देशकालादिशुद्धिमनुसृत्य स्वशक्तिवाग्बुद्ध्याद्युपायशीलो विशुद्धो भवति इति भावः ।

अत्र प्रायः सर्वत्र धर्मशास्त्रे पुण्यदेशं कर्मयोग्यत्वेन लक्षयितुं कृष्णसार-मृगसञ्चारः उपयोजितः । स्यादिह कश्चिद्विशेषः यमवलंब्य कर्मभूमिपरिष्कारः विहितः तत्वज्ञैः महर्षिभिः। तथा च सौवीरकीकटासंस्कृतेरिणव्यतिरिक्ताः कृष्णसार-अध्युषिता देशा कर्मण्याः इति ज्ञेयम् । तत्र अमेरिकादिदेशाः कृष्णसारमृगाभावात् व्यावर्तिताः । इतरे भारतसमीपस्थाः देशाः असौवीरत्वादिना व्यावर्तिताः। भारतेऽपि अङ्गवङ्गादयः असंस्कृताश्चेत्

तत्पदेन व्यावर्तिताः इति बोद्धव्यम्। कीकटशब्दः सामान्यतः मगधदेशैकदेशवाची **'बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति'** भागवत- (१.३.२४) इत्युक्तत्वात्। अयमेव (समुद्र प्रान्तकाननप्रदेशः) इति व्याख्यातः **सुधीन्द्रतीर्थश्रीचरणैः**। शुभाचाररहितः कुत्सिताचारपरिपूर्णो देशः इति शब्दकल्पद्रुमः।

कोऽत्रार्थो विवक्षितः कश्चात्र विशेष इति तात्पर्यं निर्निर्णीषन्ति श्रीमदाचार्याः।

तथाहि –

**नदीसमुद्रगिरयः आश्रमाश्च वनानि च ।**
**नगराणि च दिव्यानि सालग्रामादयस्तथा।**
**तेषां समीपगाश्चैव देशा योजनमात्रतः ।**
**कर्मण्यास्तु समाख्याताः तदन्ये कीकटाः स्मृताः ।**
**तदन्येऽपि तु ये देशाः कृष्णसारोषिता स्वतः ।**
**कर्मण्या एव विज्ञेयाः यदि नाध्युषिताः खलैः।**
**खलैरध्युषिताश्चापि यदि सद्भिरधिष्ठिताः।**
**कर्मण्याः इति विज्ञेयाः विष्णुलिङ्गानि यत्र च ।** **इति स्कान्दे**

नदीगिरयश्च भागवतोक्ताः गङ्गागोदावर्यादयः मलयवेंकटादयश्च इह परिगणनीयाः ।समुद्रः प्रसिद्धः ।आश्रमाः = भृगुगौतमाद्याश्रमाः पुराणोक्ताः वनानि दण्डकारण्यादीनि । नगराणि काञ्चीप्रभृतीनि । सालग्रामादयः= चक्राङ्कः आदिपदोक्तः । स्वतः कर्मण्यत्वाय लक्षणोक्तेः स्वतः पारंपर्यक्रमेण सालग्रामचक्राङ्कवत्वं इह विवक्षितम्। नद्यादौ एव साक्षात् वासः अशक्य इत्यतः तेषां समीपगाः इत्युक्तम् । कियत्पर्यन्तं ? योजनमात्रतः । नद्यादि-योजनमात्रान्तरिता देशाः कृष्णसारसद्भावमनपेक्ष्यापि पवित्राः कर्मण्याः इत्यर्थः । वर्णाश्रमोचितकर्मानुष्ठानयोग्याः देशा इत्यर्थः। तदन्ये स्वतो निषिद्धसौवीरासंस्कृतेरिणदेशेभ्यः भिन्नाः। तथा पूर्वोक्तनद्यादिसमीपगयोजना-

मात्रान्तरितदेशभिन्नाः । समुद्रप्रान्त-काननदेशाः विवक्षिता इति **सुधीन्द्र-तीर्थाः** । नद्यादिसमीपगयोजनमात्र देशभिन्नाः योजनद्वितीयाद्यन्तरिता देशाः इति **छलारी आचार्याः**। इमे देशाः कीकटाः स्मृताः। तदन्येऽपि तु कीकटदेशेभ्यः अर्थात् समुद्रप्रान्तकाननदेशेभ्यः भिन्नाः, पूर्वोक्तनद्यादि-व्यतिरिक्ताः मध्यदेशाः इति सुधीन्द्रतीर्थाः। पूर्वोक्तयोजन द्वितयाद्यन्तरिता एवेति छलारीयाः। यदि ते कृष्णसाराध्युषितास्तथा खलैः विष्णुद्रोहिभि-रनध्युषिताः तेऽपि कर्मण्या इति विज्ञेयम् । खलाध्युषिता अपि यदि सात्विकाधिष्ठिता अथवा विष्णुलिङ्गयुक्ताः = विष्णुप्रतिमामन्दिरादि विशिष्टाश्चेत् कर्मण्याः इत्यर्थः।

छलारीयप्रकारेण नद्यादिदेशानां स्वतः शुद्धत्वम् । सौवीरादीनां (तत्र नदीदेशानामपि) सर्वात्मना अशुद्धत्वम् । सौवीरादिभिन्न नद्यादिभिन्नस्य कीकटत्वम्, तत्र कृष्णसाराभावेऽशुद्धिः, कृष्णसारसत्वे शुद्धिः ,कृष्ण-सारसत्वेऽपि खलाध्युषितत्वे पुनः अशुद्धिः, खलाध्युषितत्वेऽपि यदि विष्णुलिङ्गं सदधिष्ठितत्वं वा तदा शुद्धिरेव । तथाच भागवते कृष्णसारोऽथ इति प्रथामर्धेन कीकटघटकदेशस्यैव शुद्धिः प्रस्तुता, नान्यत्र । द्वितीयार्धे कीकटवर्जनं तु खलाध्युषितत्वेन निमित्तेन, न तु सौवीरादिवत् स्वतः । स्म शानादिवत् सौवीरादीनां सर्वात्मना अशुद्धिः । अत्र बीजं तु तात्पर्ये कीकटमात्रे प्रतिप्रसवस्वीकारः ।

सुधीन्द्रतीर्थप्रकारेण तु सौवीरादितुल्यता कीकटस्य । कृष्णसारेण शुद्धिस्तु सौवीरादि(कीकट) चतुष्टयाभिन्नस्थले। तत्रैव प्रतिप्रसवविचारः।

पाराशरीये चोक्तम्। **देशेष्वन्येषु या नद्यः धन्या सागरगाः शुभाः ।**
**तीर्थानि यानि पुण्यानि मुनिभिः सेवितानि च ।**
**वसेयुः तदुपान्तेषु शमिच्छन्तो द्विजातयः ।**
**मुनिभिः सेवितत्वेन पुण्यदेशः प्रकीर्तितः** । इति

तथैव श्रीमदाचार्यैरपि उक्तं **तात्पर्यनिर्णये** । तथाचायमभिसन्धिः ।

भागवतादिशास्त्रप्रमितनद्यादियोजनमात्रान्तरितो देशः स्वतः शुद्धः । तत्र कृष्णसारादिनिमित्तान्वेषणं नावश्यकम् । शुद्धिश्चेह तरतमोपेतः । प्रमाणान्तरानुसारेण तत्तदुचितकर्मादियोग्यताप्रयोजिकैवेति विज्ञेयम् । एतेन विदेशेषु सालग्रमादि नयनद्वारा शुद्धिसंपादनप्रयत्नः तेषामपि कर्मण्यत्वापादानं च प्रत्युक्तम्। सालग्रामादीनां सर्वत्र नेतुं शक्यत्वेन देशविभागपरशास्त्रस्यैव वैयर्थ्यापत्तेः। शौच–कूपस्मशानादिदेशानामपि कर्मण्यत्वप्रसङ्गात् बहुविप्लवापत्तेः यत्किञ्चिदेतत् । ततश्च पूर्वोक्तस्वतःशुद्धदेशव्यतिरिक्तो देशोऽपि कर्मण्यो भवति । स च विष्णु लिङ्गसदधिष्ठितत्व एतदन्यतराभाव–विशिष्टखलाध्युषितकीकटभिन्न सौवीर–असंस्कृतेरिणभिन्नस्वाभाविक–कृष्णसारविशिष्टो देशः। ततश्च अमेरिकादयो देशाः सर्वेऽपि कृष्णसारमृगा–भावाद्वा वैदिकसंस्कारराहित्यात् खलैरध्युषितत्वाद्वा अकर्मण्याः । भारतव्यतिरिक्ता सर्वेऽपि देशाः प्रायः स्वतो वैदिकसंस्कारहीनाः इति स्वतोऽकर्मण्याः इति न वैदिकसंस्कारोपि शक्यसंपादनः। तत्संपादयितुरपि संस्कारनाशाद्धेतोः । भारते तु कालराजादिबलात् वैदिकसंस्कारध्वंसेऽपि सद्भिः पुनश्शक्योत्पादनः स इति नास्ति तस्याकर्मण्यत्वम्। सौवीरेरिणौ तु प्रत्यक्षश्रुत्यैव अकर्मण्यौ इति निश्चितौ। पुराणेषु केषांचन सात्विकानां सौवीरादिवासश्रवणे ऽपि युगभेदव्यवस्था वा विशिष्टाधिकारिकत्वव्यवस्था वा क्षत्रियपर्यन्तवासव्यवस्था वा अङ्गीकार्या भवति। अन्यथा विरोधात्। भारतदेशाद्वहिः कृष्णसारमृगः विदेशेषु न क्वापि लक्षितः इति इदानींतन संशोधकाः स्पष्टमुल्लिखन्ति इति विशेषोऽवधातव्योऽवश्यम्। एवं चाप्यवगन्तव्यम् प्रमितप्राचीनशिष्टसज्जनाधिष्ठितत्वस्य देवाद्युत्तमाधिकारि–परिपूजितपुराणप्रसिद्धस्वयंव्यक्तादिविष्णुवैष्णवलिङ्ग(प्रतिमादि)युक्तत्वस्य वा प्रत्येकं देशशुद्ध्यापादकत्वमिति । तदुक्तं तत्रैवोत्तरत्र –

**देशान् पुण्यान् संश्रयेत मद्भक्तैः साधुभिः श्रितान् ।**
**देवासुर मनुष्येषु मद्भक्ताचरितानि च ।।** (भागवत–११–२९–१०)

व्याख्यातश्चायं श्लोकः **श्रीसुधीन्द्रतीर्थश्रीचरणैः**। तथाहि '**देवासुर-मनुष्येषु = देवाः स्वयंभूशंभुप्रभृतयः, असुरेषु प्रह्लादादयः, मनुष्येषु प्रियव्रतादयः मद्भक्तैराचरितानि पूजितप्रतिमासहितानि स्थलानि संश्रयेतेत्यन्वयः**' इति। मद्भक्तैः साधुभिः प्रसिद्धैः आश्रितान् पुण्यान् देशानेव संश्रयेत नान्यान् इत्यर्थः। अत एव तीर्थयात्रादिक्रमेण बहुदेशसञ्चारवन्तोऽपि अस्मत्प्राचीनदेशिकाः ***श्रीमदाचार्यश्रीजयतीर्थ श्रीवादिराजतीर्थ प्रभृतयः समुद्रयानं विनाऽपि पद्भ्यामपि गम्यान् सौवीरोषिरहूणादिदेशान् नैव जग्मुरिति सुप्रसिद्धमेतत्*** पुराणेषु नैकमपि विदेशीयं पुण्यं क्षेत्रमुपवर्णितम्। नैका नदी विदेशीयोदाहृता। न वा तत्तारतम्यं निर्णीतम्। न तासां विष्णुपादोदकत्वं वा वर्णितम्॥

अत एव **नारायणस्मृतौ** पञ्चमाध्याये

**दुर्देशगमनेनैव दुष्प्रतिग्रहकोटिभिः।**
**म्लेच्छान्त्यश्वपचस्त्रीभिः संसर्गात् चिरकालतः॥**
**अपेयमध्यपानाद्यैः दुष्टमांसादिभक्षणैः।**
**आर्तानां का गतिः ब्रह्मन् वदस्व करुणानिधे॥**

इति दुष्टदेशगमनविचारे प्रश्नः कृतः संगच्छते। ततः दुर्वासाः अपि एतत्प्रश्नोत्तरवेलायां –

**दुर्देशगमने चैव दुष्टस्त्रीसंगमेषु च।**
**समुद्रलंघने चैव नौयानं अवलंब्य च।**
**द्वीपान्तरगतौ चैव चण्डालस्त्रीनिषेवणे।**
**सन्ध्यादिकर्मणां चैव श्राद्धादीनां च लोपने।**
**ब्रह्मघ्नादिसहावासे तुरुष्कादिसमागमे।**

इति एवं स्वरूपपापस्य निष्कृतिं अभ्यधात्।

**सङ्कल्पविचारः**

**कण्वस्मृतौ** नित्यनैमित्तिककाम्यकर्मणां संकल्पपूर्वकाणामेव फल-प्रदत्वमित्याशयेन देशकालसंकीर्तने विशेषोऽभिहितः॥

**देशकालश्च वक्तव्यः कर्मादौ प्रत्यहं द्विजैः ।**
**जम्बूद्वीपं भारतस्य वर्षं भारतखण्डकं ।।**
**सर्वसाधारणं प्रोक्तं इदं संकल्पमात्रके ।**
**यस्मिन्देशे स्थितो मर्त्यः तं देशं स्वगृहावधि ।**
**समुच्चरेत् पैतृकेषु नान्यत्रैवं विदुर्बुधाः ।**
**गण्डक्याः अपि गङ्गायाः नर्मदायास्तथैव च ।**
**गोदावर्याश्च कृष्णायाः कावेर्याश्च ततः परं ।**
**ताम्रपर्ण्याश्च सेतोश्च मध्यभागं पठेद्धि सः ।**
**कालं परार्धं प्रथमं कल्पं मन्वन्तरं युगं ।**
**तत्पादं संवत्सरं मासमृतुं पक्षं तिथिं ततः ।**
**क्रमाद्वरेण संयुक्तं समुच्चार्य च तादृशे ।**
**सप्तम्यन्तेन च तिथौ करिष्यमीति कर्मणः ।**
**नामोच्चार्य वदेदेवं एतत् संकल्पमुच्यते ।।**इति ।।

इति भारतवर्षगतभारतखण्डकं सर्वसाधारणमभिधाय तत्र गङ्गा-यमुनयोर्मध्ये, गङ्गागोदवर्योर्मध्ये, गोदावरीकृष्णयोर्मध्ये, कावेरीताम्रपर्ण्योर्मध्ये इति वक्तव्यविशेषाः देशभेदाद्यनुसारेण अभिहिताः । एतेन विदेशानां भारतवर्षभारतखण्डान्तर्भावाभावात् साधारणसङ्कल्पस्यैवाप्राप्तेः विशेषाणां सुतरां अप्राप्तेश्च अकर्मण्यत्वं उररीकृतं द्रष्टव्यम् । सर्वकर्मणां सङ्कल्प-प्रधानत्वात् । तत्रैव **(काण्वस्मृतौ)** –

**श्रुतिस्मृत्युदितं कर्म विहितं वैदिकस्य यत् ।**
**तदुक्तेनैव मार्गेण कर्तव्यं नान्यथा चरेत् ।।**

तथा च सन्तीह विदेशगमननिषेधपराणि भारतवर्षमात्रस्य समाश्रयणीय-त्वपराणि इयन्ति च अन्यानि च बहुप्रमाणानि । नास्त्यैकमपि विदेश-गमनाभ्यनुज्ञापरम् । शिष्टाचारः प्राचीनसम्प्रदायश्च विदेशगमनप्रबलविरोधिनौ बहकालाज्जागरूकाविति नास्मिन् विषये बहुवक्तव्यम् । कृते तु विदेशगमने तद्देशानामकर्मण्यत्वादधिकारिणाम् व्यपगच्छत्यधिकारः, ततः कर्मलोपश्च

भवति। लुप्ते च कर्मणि सः पातकी पतितश्च भवति । तत्र प्रमाणानि **देवलस्मृतिः –**

**मासं कारागृहे वासः नौभिर्यात्रा दिनत्रयं ।**
**म्लेच्छावासस्तथा पक्षं यो वर्तेत स पातकी ।।**
**सन्ध्याहीनोऽशुचिर्नित्यं अनर्हः सर्वकर्मसु ।**
**यत्किञ्चित् कुरुते कर्म न तस्य फलमश्नुते ।** **– दक्षवचनम्**
**योन्यत्र कुरुते यत्नं धर्मे कार्ये द्विजोत्तम ।**
**विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ।।** **– कूर्मपुराणम्**

इदं चात्रावधेयम् । कर्मभूमावपि भारते कतिचन प्रदेशाः गमनवासादिं प्रति निषिद्धाः उत्सर्गतः कर्मण्यत्वप्राप्तावपि निमित्तान्तरतः निषेधो युज्यते । तत्र बोधायनधर्मसूत्रव्याख्याने(गोविन्दप्रणीते) वीरमित्रोदये, स्मृतिचन्द्रिकायां, स्मृतिमुक्तावल्यां एवमन्यत्र बहुग्रन्थेषु च विमृश्य सङ्ग्रहः क्रियते ।।

अत्र अयं विमर्शनीयोंऽशः 'भारतेऽपि कस्य देशस्य अगम्यत्वं , कस्य देशाचारस्य अस्वीकारः, पुनस्तत्र केऽपवादाः?' इति ।

केषुचन देशेषु कृष्णसारादिवर्णाश्रमधर्मलिङ्गप्रयुक्तकर्मण्यत्वसिद्धौ अपि नैमित्तिको निषेधः दृश्यते । अयं च बोद्धव्योंऽशः यत्र नैमित्तिको निषेधः तत्र निमित्तापये नैमित्तिकापायः इति ।। अत्र भारतैकदेशनिषेधः कथं नैमित्तिकः इति उपपाद्यते। तत्र प्रथमं किं वर्णाश्रमाचारधर्मस्य कारणत्वेन स्वीकृतं अङ्गं इति विचारे सर्वत्र स्मृतिषु एवं समाख्या दृश्यते।

**(समाख्याश्रुतयः) बृहत्पाराशरे –**

**१. अथातो हिमशैलाग्रे देवदारुवनाश्रमे ।**
**व्यासमेकाग्रमासीनमृषयः प्रष्टुमागताः ।**
**मनुष्याणां हितं धर्मं वर्तमाने कलौ युगे ।**
**वर्णानां आश्रमाणां च किञ्चित् साधारणं वद ।।** इति

साधारणवर्णाश्रमविचारं मुनयः पप्रच्छुः तदा भगवान् व्यासः उवाच –

**वर्णानां आश्रमाणां च सर्वेषां धर्मसाधनं ।**

***मृगः कृष्णः चरेद्यत्र स्वभावेन महीतले ।***

**वसेत् तत्र द्विजातिस्तु शूद्रो यत्र तु तत्र तु ।**

**हिमपर्वत विन्ध्याद्यो विनशनप्रयागयोः ।**

**मध्ये तु पावनो देशः म्लेच्छदेशः ततः परं ।**

**देशेष्वन्येषु या नद्यो धन्याः सागरगाः शुभाः ।**

**तीर्थानि यानि पुण्यानि मुनिभिः सेवितानि च ।।**

**वसेयुः तदुपान्तेऽपि शमिच्छन्तो द्विजातयः ।**

**मुनिभिः सेवितत्वाच्च पुण्यदेशः प्रकीर्तितः ।**

**यत्र पानमपेयस्य देशेऽभक्ष्यस्य भक्षणं ।**

**अगम्यागामिता यत्र तं देशं परिवर्जयेत् ।**

**एवं देशः समाख्यातो याज्ञियस्तु द्विजन्मनां ।**

***एवमेवानुवर्तेरन् देशं धर्मानुकाङ्क्षिणः*** ।। इति ।।

अत्र 'हिमपर्वत' इत्यारभ्य 'पुण्यदेशः प्रकीर्तितः' इत्यन्तं पुण्यदेशं निष्कृष्योक्त्वा यत्रेति वैदिकसंस्कारराहित्यस्य पापदेशत्वप्रयोजकत्वं निर्णीतम् एवमेवेति एवकारेण प्रकारान्तरस्यानाश्रणीयत्वं च ।

अत्र विन्ध्यात्दक्षिणदेशः पुण्यदेशः समुद्रपर्यन्तः ग्राह्य इत्येतदर्थं तीर्थानि यानि इत्युक्तम् । अतः श्रीरङ्गादिक्षेत्रस्य सुतरां ग्राह्यत्वमिति बोध्यमिति भावः । अत्र स्पष्टशब्दैः वर्णाश्रमााराङ्गतया कृष्णसारोषितदेशः अभिहितः ।

२. **लघुहारीतस्मृतौ** अपि एवमेव अस्ति । तत्र हि ।।

**ये वर्णाश्रमधर्मस्थाः ते भक्ताः केशवं प्रति ।**

**इति पर्वं त्वया प्रोक्तं भूर्भुवःस्वर्द्विजोत्तमाः ।**

**वर्णानामाश्रमाणां च धर्मान्नो ब्रूहि सत्तम ।**

**येन सन्तुष्यते देवो नारसिंहः सनातनः ।**

इति आरभ्य केचन मुनयः पप्रच्छुः । तदा तावत् पुरावृत्तं उदाजहार ।

हारीतं सर्वधर्मज्ञं आसीनमिव पावकं ।
प्रणिपत्याब्रुवन् सर्वमुनयो धर्मकाङ्क्षिणः ।
भगवान् सर्वधर्मज्ञ सर्वधर्मप्रवर्तक ।
वर्णानामाश्रमाणां च धर्मान्नो ब्रूहि भार्गव ।
इति प्रश्नानन्तरं हारीत उवाच ।।
श्रृण्वन्तु मनयः सर्वे धर्मान् वक्ष्यामि शाश्वतान् ।
वर्णानां आश्रामाणानां च योगशास्त्रं च सत्तमाः ।
सन्धार्य मुच्यते मर्त्यो जन्मसंसारबन्धनात् ।
पुरा देवो जगत्स्रष्टा परमात्मा जलोपरि ।
सुष्वाप भोगिपर्यङ्के शयने तु श्रिया सह ।
तस्य सुप्तस्य नाभौ तु महत् पद्ममभूत्किल ।
पद्ममध्येऽभवद्ब्रह्मा वेदवेदाङ्गभूषणः ।
स चोक्तः देवदेवेन जगत्सृज पुनः पुनः ।
सोऽपि सृष्ट्वा जगत्सर्वं सदेवासुरमानुषं ।
यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान्मुखतोऽसृजत् ।
असृजत् क्षत्रियान् बाह्वोर्वैश्यानप्यूरुदेशतः ।
शूद्रांश्च पादयोः सृष्ट्वा तेषां चैवानुपूर्वशः ।
यथा प्रोवाच भगवान् ब्रह्मयोनिं पितामहः ।
तद्वचः संप्रवक्ष्यामि श्रृणु तद्विजसत्तमाः ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं मोक्षफलप्रदम् ।
ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणः स्मृतः ।
तस्य धर्मं प्रवक्ष्यामि तद्योग्यं देशमेव च ।
कृष्णसारो मृगो यत्र स्वभावेन प्रवर्तते ।
तस्मिन्देशे वसेद्धर्मः सिद्ध्यति द्विजसत्तमाः । इत्यादि ।

एवं च अत्रापि देशस्य भारतस्य स्वरूपतः वर्णाश्रमाचारकारणत्वं इतरव्यावर्तकतया उपात्तम् । अयं चापि बोद्धव्यः अंशः धर्मसामान्यं

विष्णुप्रीतिजनकं इति सर्वस्य वर्णाश्रमाचारस्य एवं साधारणस्य च वैष्णवत्वं भवति । तथापि साधारणस्य सर्वैः अनुष्ठातव्यत्वात् चातुर्वर्णिकानां चतुराश्रम स्थानां अपि साधारणधर्मेऽविशेषात् कर्तव्यता इति वैष्णवधर्माणां पृथुगुपदेशः क्रियते वैष्णवधर्मे तु न देशः अङ्गं भवति । तथा कुत्राप्यश्रुतत्वात्। एतदनन्तर**बृहद्धारीतस्मृतौ** मुनिभिः वैष्णवधर्मविचारे प्रश्ने कृते हारीत महर्षिभिः देशविचारः न साधारणतया उक्तः इति भक्त्यादिवैष्णवधर्माणां पुलिन्दपुल्कसादि नीचजातिभिः अन्यदेशस्थैः कर्तव्यता अवगन्तव्या । दृष्टान्ता अपि सन्ति इति ।

**३.याज्ञवल्क्यस्मृतावपि** स्पष्टमिदम् ।

**योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।**
**वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ।**
**मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन् मुनीन् ।**
**यस्मिन् देशे मृगः कृष्णः तस्मिन् धर्मान् निबोधत ।**

इत्यनन्तरं वर्णाश्रमोचित संस्कारकर्मानुष्ठानादिकमभिधीयते ।

४. **वसिष्टस्मृतौ (धर्मसूत्रे)** अप्येवमेवास्ति। **अथातः पुरुषनिः श्रेयसार्थं जिज्ञासा**। इत्यारभ्य वर्णाश्रमविचारे प्रसक्ते **यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसमिति** इत्युक्तम् । पुनः वैष्णवधर्माचारप्रश्ने कृते वसिष्टस्मृतौ देशविचारः न स्वीक्रियते ।

**५.व्यासस्मृतौ** अपि

**वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् ।**
**पप्रच्छुः मुनयोऽभ्येत्य धर्मान् वर्णव्यवस्थितान् ।**
**स पृष्टः स्मृतिमान् स्मृत्वा स्मृतिं वेदार्थगर्भितां ।**
**उवाचाथ प्रसन्नात्मा मुनयः श्रूयतामिति ।**
**यत्र यत्र *स्वभावेन* कृष्णसारो मृगः सदा ।**
**चरते तत्र वेदोक्तो धर्मो भवितुमर्हति ।** इति

एवं च यत्र यत्र वर्णाश्रमधर्मविचारः प्राप्तः तत्र सर्वत्र कश्चनेतरव्यावर्तितः देशः कारणमिति ज्ञायते (विधीयते) । एवं च अव्यभिचरिततया भारतस्यैव वर्णाश्रमाचाराङ्गत्वं इति सिद्ध्यति । एवमेव मनुस्मृतौ, पैठीनसे, भागवते, पुराणेषु, तात्पर्ये, गौतमे, आपस्तम्भे,देशस्य वर्णाश्रमाचाराङ्गत्वं उद्घोषितम् ।

एवं भारतेऽपि केचन देशाः प्रवेशानर्हाः । ये तु प्रवेशस्याप्यनर्हाः ते सुतरां तद्देशाचारग्रहणेऽनर्हाः, केचन वासानर्हाः ,केचन श्राद्धादिकर्मणि,इति तत्र विचारः क्रियते । प्रथमतः विषयानुक्रमणिका । अनन्तरं प्रामाणानि । इदानींतन भारते कुत्र इमे देशाः सन्तीति विमृश्य संगृहीतः ।।

**गमनानर्हाः**

१. **अङ्गाः**(चम्पापुरीइत्यादि बिहारैकदेशः) २. **वङ्गः**–(वेस्ट् बेङ्गाल्, बेन्गाल्) ३. **कलिङ्गः** ( विशाखपट्टणं, एवं समुद्र प्रान्तः) ४. **सौराष्ट्र** (सूरत् इत्यादि) ५. **मगध** (कीकट बिहारैकदेशः) ६. **आरट्टाः** (पाकिस्थानपन्जाब्) ७. **कारस्करः**(कारं वधं करोति इति मरणदण्डदानप्रदेशः– काश्मीरपर्वतदेशः) ८.**पुण्ड्र** = (वेस्ट बेन्गाल मध्ये एकदेशः) ९. **प्रानूनः**(न नून= अनूनः प्रकर्षेण अनूनः = प्रानूनः ऐराक्यजनाक्रान्त काश्मीरादिदेशैकदेशः) १०. **सौवीर**(पाकिस्थानैकदेश) ११. **सिन्धु** (सिन्धुप्रान्तः पाकिस्थाने) १२. **कोङ्कणः** (पश्चिमसमुद्रप्रान्तैकदेशः)

**यथाक्रमं गमनानर्हत्वे अपवादः**– १. **नदी** (गङ्गादि) २.**गङ्गासागर सङ्गम देशः**–३. **कलिङ्ग** (सिंहाचल गोदावरी प्रान्तःगोदावरी सागरसङ्गमः इत्यादि) ४.(नास्ति) ५. **गया, गङ्गादिनदी, च्यवनाश्रम, राजगृह**(नलन्दा जिल्ल वनं) ६. **नदीदेशाः**(शतद्रु, विपाश , ऐरावति , असिक्नि, चन्द्र–भागा, वितस्त, सिन्धु, नदी प्रान्ताः) ७. **नदीदेशाः** ८. **गङ्गातीरदेशः**– ९,१०,११. **नदीदेशाः** १२. **कोङ्कणः** (पश्चिमसमुद्रप्रान्तैकदेश)

**श्राद्धानर्हाः**१. अङ्गाः २. वङ्गः ३. कलिङ्गः ४. सौराष्ट्र ५. मगध

६. आरट्टाः ७. कारस्करः. ८. पुण्ड्र ९. प्रानूनः १०. त्रिशङ्कुः (त्रिशङ्कोः वर्जयेद्देशं सर्वं द्वादशयोजनं उत्तरेण महानद्याः दक्षिणेन च कीकटान्. ११. सौवीर पञ्चनदीनां सङ्गमस्थलदेश. १२ सिन्धु. १३.कोङ्कणः ।

**एतद्देशाचाराणां अग्राह्यत्वम् (तत्र निमित्तानि १–कल्याणा–चाराभावः स्त्रीषु अनियमः शीधुपानं इत्यादि)**

१. अङ्गाः २. वङ्गः ३.कलिङ्गः ४. सौराष्ट्र ५. मगध . ६. आरट्टाः ७. कारस्करः ८. पुण्ड्र ९. प्रानूनः१०. अ= आनर्तकः(द्वारका यस्मिन् द्वीपे)१०. आ= अवन्ति(उज्जयिनी) ११. दक्षिणापथः (भारते उत्तरदेशतः दक्षिणदेशे आगमनार्थं विन्ध्यपर्वते पश्चिमभागे यो मार्गः उपयुज्यते सः दक्षिणापथः ) १२. उपावृत् = अन्त्यजजातिविशेषा जनाः यत्र देशविशेषे वसन्ति १३. सिन्धु १४. सौवीर नदीषु पुनरपवादः १५. काञ्ची १६. कोसल १७. कर्णाटः पाकिस्थाने शिबिदेश समीपे १८. कच्छजं (द्वीपं गुजरातसमुद्रे) १९. कावेरी ( अभिजनाः संकेतिप्रभृतयः) २०. कोल्वण(त्र्यम्बकगिरि–मध्यदेशः महाराष्ट्रदेशे)

**वासानर्हाः** –१. अङ्गाः २. वङ्गः ३.कलिङ्गः ४. सौराष्ट्र ५. मगधः ६. आरट्टाः ७. कारस्करः ८.पुण्ड्र : ९. प्रानूनः १०. सौवीरः ११. सिन्धु १२. कोङ्कणः १३. आन्ध्र (मछलीपट्टणादिस्मुद्रप्रान्तदेशः) १४. मालविकः (उदयपुरी समीप राजस्थानैकदेश) १५. वैन्ध्यम्(विन्ध्यभागः)१६ खश (कश्मीरपर्वतप्रान्ताः)

**विवाहानर्हाः** १. अङ्गाः २. वङ्गः ३.कलिङ्गः ४.सौराष्ट्र ५. मगध ६. आरट्टाः ७.कारस्करः८. पुण्ड्र : ९. प्रानूनः १०.सौवीर ११. सिन्धु १२.कोङ्कणः १३. आन्ध्रः १४. मालविकः १५. वैन्ध्यम् १६. खशः।।

**यज्ञानर्हाः** १. अङ्गाः२. वङ्गः ३.कलिङ्गः ४. सौराष्ट्रम् ५. मगधः ६. आरट्टाः ७. कारस्करः ८. पुण्ड्रः ९. प्रानूनः १०. सौवीरः ११. सिन्धुः १२. कोङ्कणः १३. आन्ध्रः १५. वैन्ध्यम् १६. खशः

**लङ्घनानर्हाः** १.सिन्धुपारं २.करतोया–बाङ्लादेशे ३. नर्मदा –दक्षिणापथ सौराष्ट्रसमीपे एव लंघनं न कार्यम्, अन्यत्र नर्मदायाः प्रदक्षिणस्य विहितत्वात् ४. कौशी–बान्लादेशनदी ६.पद्मपश्चिमपारं पुष्करं पश्चिम–भागः ।।

अत्र देशाचाराद्यग्रहे निमित्तानि तु तद्देशस्य खलाध्युषितत्वं , कल्याणाचाराभावो, स्त्रीषु अनियमः, शूद्रजनाक्रान्तत्वं , अधार्मिकजनावृतत्वं, म्लेच्छावृतत्वं, इत्यादीनि। यत्र असौवीर इत्यादिश्रौतनिषेधः तत्र तीर्थयात्रां विना न गच्छेत् । यत्र तु खलाध्युषितत्वं, तत्र चक्राङ्कादिभिः शोधनसंभवात् गमनवासाद्यर्हता इति भावेन कृष्णामृतमहार्णवे "म्लेच्छदेशे" इति श्लोके उत्तम् ।एवं च भारते तीर्थयात्रार्थं सर्वेषां आपदि गृहस्थस्य ,शूद्राणां अनापद्यपि गमनवासादि कर्तुं शक्यते ।।

चातुर्मास्ये व्रते तिन्त्रिणी निषेधे तत्र तादृश कालनिमित्तनिषेधस्य नैमित्तिकत्वात् तादृशनिमित्तापाये तत्स्वीकारः यथा उचितः एवं अयं अङ्गादिदेशगमननिषेधो । पलाण्डुभक्षणस्य स्वरूपतः निर्निमित्ततया निषेधः यथा तथा म्लेच्छदेशगमनस्य निषेधः । यतो हि सर्वत्र वर्णाश्रमाचाराङ्गं भारतमेव । तदुक्तं **लौगाक्षिस्मृतौ** –

**देशानां पुण्यदेशत्वं महदैकनिवासतः ।**
**असदैकनिवासेन कुदेशत्वं तथा स्मृतम् ।**
**अङ्गवङ्गादयो देशाः षट्पञ्चाशत्कभेदकाः ।**
**कदाचित्पुण्यदेशाः स्युः महतां सन्निवेशतः ।**
**कदाचित्तदभावेन स्युस्ते पापविशेषणाः ।**
**देवदेशविशेषाश्च धेन्वावासनिवेषणैः ।**
**पुनः शुद्धाः भवन्त्येव तथा मन्त्रोक्षणेन च ।**

अङ्गादिदेशगमनं यदि यात्रार्थं आपदि क्रियते तदा तत्र कृतस्य वर्णा–श्रमाचारस्य फलं अवश्यंभावि । अतः भारतगतदेशनिषेधः न स्वाभाविकः तथात्वे आपद्यपि निषेधः जागरूकः स्यात्। तथाहि **स्कान्दे** –

अङ्गवङ्ग कलिङ्गाश्च पर्वताश्च खशान्स्तथा ।
सिन्धुसौवीरसौराष्ट्रान् पारदानान्ध्रमालवान् ।
विवाहने द्विजो नित्यं अनापदि विवर्जयेत् ।
एतानप्यापदि गृही संश्रयेद्वृत्तिकर्शितः । स्पष्टम्

अत्र प्रमाणसंग्रहःदेशाचारे–

अवन्तयो(आनर्तका)ऽङ्गमगधाः सुराष्ट्राः दक्षिणापथाः ।
उपावृत्तिसिन्धुसौवीराः एते सङ्कीर्णयोनयः ।।

– बोधायनधर्मसूत्रे द्वितीयखण्डे १४ सूत्राणि

(गमनविचारे) आरट्टान् ,कारस्करान् , पुण्ड्रान् , सौवीरान्, वङ्गान् , कलिङ्गान् , प्रानूनानिति च गत्वा पुनस्तोमेन यजेत सर्वपृष्टया वा (१५ –२– बोधायने)

आदिपुराणे–

आरट्टा नाम ते देशाः न तेष्वार्योन्वहं वसेत् ।
पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते ।
ऋषयो निष्कृतिं तस्य प्राहुः वैश्वानरं हविः ।

(वीरमित्रोदय पङ्क्तयः= आनर्तका द्वारका यस्मिन् देशे ।) अङ्गश्चम्पाप्रदेशः। अयं च निषेधः तीर्थयात्रां विना, तदुक्तं देवलस्मृतौ १६श्लोके –

अपवादविचारे – अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गच्छन् पुनःसंस्कारमर्हति ।

लङ्घन विचारे – आर्यावर्तसमुत्पन्नो द्विजो वा यदि वाऽ द्विजः ।
कर्मदां सिन्धुपारं च करतोयां न लङ्घयेत् ।।

अपवादःगमनवासादौ – आदिपुराणे (वीरमित्रोदये ५९पुटे)

कीकटेषु गया पुण्या नदी पुण्या पुनः पुनः ।
च्यवनस्याश्रमः पुण्यः पुण्यं राजगृहं वनं ।।

श्राद्धानर्हदेशविचारे – वायुपुराणे –

त्रिशङ्कोः वर्जयेद्देशं सर्वं द्वादशयोजनं ।
उत्तरेण महानद्याः दक्षिणेन च कीकटान् ।
देशः त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः ।

देशाचाराग्रहविचारे – आदिपुराणे –

काञ्चिकोसलसौराष्ट्रदेशाः कर्णाटकच्छजाः ।
कावेरी कोल्वणोद्भूताः ते जनाः निन्दिताः भृशं ।।

लङ्घनविचारे – आदिपुराणे

नर्मदासिन्धुकौशीनां पारं पद्मस्य पश्चिमं ।।
गत्वा नरकमाप्नोति तीर्थकालादिकं वसन् ।

विवाहयज्ञश्राद्धादौ निषेधः

अङ्ग वङ्ग कलिङ्गान्ध्र मद्रमालविकास्तथा ।
नर्मदादक्षिणे यच्च सिन्धोरुत्तर एव च ।।
पौण्ड्रश्चैव सुराष्ट्रश्च वैन्ध्यमागधकाः खशाः ।
न विवाहं तथा श्राद्धं यज्ञं तेषु समाचरेत् ।

व्यासा अपि एवमेवोचुः

देशान् शूद्रजनाक्रान्तान् अधार्मिकजनावृतान् ।
म्लेच्छावृतान् प्रयत्नेन वर्जयेद्धार्मिको द्विजः ।

इति भारते निषिद्धदेशविषये प्रमाणसङ्ग्रहः ।

ननु कृष्णमृतमहार्णवे –

म्लेच्छदेशेऽशुचौ वापि चक्राङ्को यत्र तिष्ठति ।
योजनानि तथा त्रीणि ममक्षेत्रं वसुन्धरे । १०७ ।
शालग्रामोद्भवो देवः शैलं चक्राङ्कमण्डितम् ।
यत्रापि नीयते तत्र वारणस्याः शताधिकम् । १०८ ।

इति सालग्राम चक्राङ्कसन्निधानात् म्लेच्छदेशाद्यपि शुद्धं भवति, अतः तत्र गमने न दोष इति किं न स्यात् ? इति – चेन्मैवम् । श्रीमदाचार्य भावानवबोधात् भवताम् । **श्रीभागवततात्पर्ये** ऐकादशीये कर्मण्याकर्मण्यदेशविभागमारचय्य अकर्मण्येषु सौवीरासंस्कृतेरिणकीकटेषु मध्ये कीकटमात्रे कृष्णसाराधिवासं, सदधिष्ठितत्वं विष्णुलिङ्गसद्भावं चाश्रित्य कर्मण्यता दृढीकृता श्रीमदाचार्यैः ।। यद्ययं सालग्रामचक्राङ्कसन्निधिः सौवीरदीनामपि कर्मण्यत्वं सम्पादयेत् तदा कीकटमात्रेऽपवादकथनमयुक्तं स्यात् । व्यर्थः स्यात् कर्मण्याकर्मण्यविभागः । अतः कृष्णसारोपलक्षितकर्मण्यभूमौ भारते यदि खला अधिवसेयुः तत्र तदा द्विजानांवासार्थं सालग्रामविष्णुलिङ्ग सत्सन्निधानानि अपेक्षितानि इति वक्तुं सालिग्रामचक्राङ्कमहिमा अत्र स्तूयते, न तु अकर्मण्य भूमौ कर्मर्ण्यत्वसम्पादनार्थं इत्यर्थः वक्तव्यः । अस्तु वा यथाश्रुतार्थ एव । चक्राङ्कस्थानेन योजन त्रयं शुद्धं भवति इति । किमेतेन तस्य गम्यत्वं वासयोग्यत्वं चेष्टे भवतां ? तत्र तथाऽनुक्तेः। शुद्धत्वेन, हरिक्षेत्रत्वेन वा ते ऊह्येते इति चेत् तर्हि योजनत्रयान्तर्गत स्मशानशौचकूपादिष्वपि गमनवासदेवपूजादिकर्मकरणादेरदोषत्वापत्तिः । अमेध्यादीनामपि मेध्यत्वापत्तिः । किं बहुना बुहविप्लवापत्तिः स्यात् । तथा च नेयं शुद्धिः सर्वकार्यार्हतां साधयेत् किन्तु प्रमाणान्तरानुसारं यथायोग्यं अर्हतां सम्पादयति इति सिद्धम् । ततश्च तद्देशीयानां हरिक्षेत्रत्वेन अधिकपुण्यकरं भवति इति भाव उन्नेयः । अवश्यं चैवम् । अशुचिपदेन गतार्थतायां व्यर्थमन्यत् स्यात् । एवं सर्वत्र तत्तद्वस्तुमाहात्म्यवर्णनपरेष्वर्थवादेषु तात्पर्यं विनिश्चेयम् । स्वतो म्लेच्छदेशस्य वर्णाश्रमोचितधर्मानर्हत्वात् चक्राङ्कादिसंबन्धेऽपि न विशेषः । यत्र हि स्वतः कर्मण्ये देशे दोषसंबन्धात् प्रतिबन्धात् धर्मजन्यफलासाधनत्वं तत्र हि चक्राङ्केन उत्तेजनमवश्यम् । यथा मणिप्रतिबन्धेन दाहाजनके वह्नौ मन्त्रेणोत्तेजनम् यद्धि स्वयमवह्निः सति मणौ वा न वा तत्र मन्त्रेण कृत्यमस्ति ।।

किञ्च- **यत्रापि नीयते तत्र वाराणस्याः शताधिकं** इत्युक्तत्वात् , अस्यापि यथाश्रुतार्थग्रहणे खलादिगृहं विदेशश्च वाराणस्यपेक्षया शतगुणाधिकः इति प्राप्नोति । ततश्च काशीमरणाद्यपेक्षया खलादिगृहमरणादेरेव गरीयस्त्वेन शिष्टानुष्ठानं अयुक्तं स्यात् । सर्वविधिनिषेधपरशास्त्राणां सालग्रामरहितदेश-परतया सङ्कोचे तत्सद्भावविधिमात्रेण कृतकृत्यतायां महाप्रबन्धरचने ऋषीणां प्रवृत्तेः तथा महतो 'वेदस्य च वैयर्थ्यं च स्यात् । शिष्टाचाराणां चानुपपन्नत्वप्रसङ्गात् । अतः ईदृशार्थवादानां स्तुतौ तात्पर्यात् स्वार्थे तात्पर्यं तु अधिकारिविशेषविषयं कल्प्यम् । एवं अन्येऽपि क्षुद्रोपद्रवाः परिहरणीयाः।

**अथ समुद्रोल्लङ्घनविचारः**

अत्र प्रसङ्गात् समुद्रयानविचारः प्रस्तूयते । यद्यपि भारतव्यतिरिक्ताकर्मण्य भूमिं प्रति गमनस्य पातकपातित्यादिहेतुत्वं भवति इति सिद्धे समुद्रमार्गेण गमननिषेधः नावश्यकः तथापि शास्त्रेषु समुद्रयानं अपि प्रत्येकं निषिद्धमिति तदपि अवश्यं वक्तव्यम् । ये तावत् समुद्रमुल्लङ्घ्य विदेशं निषिद्धदेशं द्वीपान्तरं वा गताः ते बहुदोषभाजः इत्येतदर्थं इदमपि निरूप्यते । पतनीयेषु समुद्रयानस्य प्राथम्यं दृश्यते **बोधायनीये धर्मसूत्रे**- तथाहि :-

**अथ पतनीयानि – (२ खण्ड- सू – १)**

**१. समुद्रसंयानं । ब्रह्मस्वन्या सापहरणम् । भूम्यनृतं सर्वापण्यैः (सर्वपण्यैः) व्यवहरणं शूद्रसेवनम् । शूद्राभिजननम् । तदपत्यत्वं च** ।। (२ खण्ड २ सू) तत्र श्रीगोविन्दस्वामिविरचितविवरणे '**पतनीयानि = पतनार्हाणि कर्माणि महापाताकेभ्यः ईषन्न्यूनानि वक्ष्यमाण उपपातकेभ्य अधिकपापावहानि इति यावत्**' । समुद्रसंयानमित्यस्य 'नावा द्वीपान्तरगमनं' इति च तत्र व्याख्यानम् । समुद्रे समुद्रस्य संयानं = समुद्रसंयानम् । अत्र नौशब्दःव्याख्याने दृश्यमानोऽपि समुद्रसंबन्धियानं इति तदर्थः । अत्र नौशब्दः व्याख्याने दृश्यमानोऽपि समुद्र यानसाधनोपलक्षकः इति ज्ञेयम् । समुद्रसम्बन्धियानसामान्यनिषेधस्य तात्पर्यगृहीतेः । अन्यथा

नौशब्दावाच्येन उपायान्तरेण समुद्रतरणस्य अनिषिद्धत्वापत्तेः । अति-प्रसङ्गश्च इष्टापत्तौ । 'न सुरां पिबेत्' इति निषेधस्य श्रुतसुरापानमात्रविषयत्वे अन्नादिमिश्रणेनोपसेचनतां संपाद्य, सुरामिश्रितान्नभक्षणस्य 'न पलाण्डुं भक्षयीत' इत्यादौ पलाण्डुरसपानस्य अदोषत्वापत्तिः। अतः तात्पर्यानुपपत्तिं अनुसन्धाय पानभक्षणादिशब्दानां उपसेवन सामान्योपलक्षकत्वं एष्टव्यम् । तात्पर्यं च क्वचित् समभिव्याहारात् क्वचित् समाख्यानात् क्वचित् शिष्टाचारात् निश्चीयते इति इह यानादिसाधनान्यनुक्त्वा समुद्रसंयानस्यैव निषेधात् समुद्रतरणोल्लंघनादियावन्निषेधतात्पर्यं निश्चीयते इति ज्ञेयम् ।

ननु **अग्नीषोमीयं पशुमालभेत** इति पश्वालंबनसामान्यविधेः मन्त्रप्रकरणाभ्यां छागरूपे पशुविशेषे उपसंहारःदृश्यते, तद्वदिहापि समुद्रयान-सामान्यनिषेधस्य **नौयात्रा तु समुद्रतः** इति विशेषपरतयोपसंहारे छागव्यतिरिक्तपश्वनालंबवत् नौभिन्नविमानादिद्वारा समुद्रयानस्या-निषिद्धत्वसिद्धिः इति चेत् **मैवम्** यतः तत्र हि सामान्यस्य विशेषेण उपसंहारः यत्र विशेषान्तरस्य अप्राप्तिः बाधो वा । यथा **छागस्य वपाया मेदसोऽनुब्रूहि** इति मन्त्रवर्णे छागशब्दश्रवणात् पश्वन्तरविनियोगे मन्त्राभावात् अमन्त्रक-विनियोगस्य असंभवाच्च प्रकरणान्नित्यत्वावगमात्, पश्वन्तराणां प्रातिस्विकविध्यभावाच्च , श्रूयमाणपशुशब्दः पशुविशेषछागपरोऽवसीयते । यथा च गामानयेतिविधेः, गवैक्ये नीलां गां बधानेत्युत्तरविधिमनुसृत्य नीलगोपरत्वं तथा । प्रकृते तु विमानादि साधनरूपविशेषान्तरस्य प्राप्तेरबाधाच्च नास्ति तथात्वमिति सामान्यस्य विशेषे नोपसंहारः। उक्तं च **सामान्य-विधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्य तु विधेर्नैवमुपसंहार इष्यते** इति । किंचेह निषेधः सामान्यनिषेधस्य विशेषोपसंहारः न शक्यः कर्तुम् । अन्यथा '**न ब्राह्मणं हन्या**'दिति सामान्यनिषेधस्य '**नात्रेयं हन्यात्**' इति विशेषोपसंहारेण आत्रेयान्यब्राह्मणहननस्यादोषत्वापत्तेः। तस्मात् सामान्य-विशेषनिषेधौ फलभेदप्रयोज्यौ उपगन्तव्यौ । न एकविशेषनिषेधेना-

परविशेषानिषेधो वा तदभ्यनुज्ञा वा सिद्ध्यति सामान्यनिषेधस्य जागरूक-त्वात् । प्रकृते तु विशेषपरवाक्यापेक्षया सामान्यपराणामेव बाहुल्यमिति अलं क्षुद्रोपद्रवनिरासायासेन ।

किञ्च – **समुद्रयानगमनं ब्राह्मणस्य न शस्यते ।**
**सम्भवेद्यदिमोहेन पुनः संस्कारमर्हति '** – **पराशरस्मृति**

न शस्यते = नाभ्यनुज्ञायते निषिध्यते इति यावत् । ब्राह्मणस्येत्युपलक्षणम् । वर्णाश्रमिभिरिति भावः । अन्यत्र 'विप्रादिनौसंस्थितं' इत्युक्तेः । मोहेन = अज्ञानेन अबुद्धिपूर्वं इत्यर्थः । पुनः संस्कारं = उपनयनादि । प्रायश्चित्तोक्तेः समुद्रयानं पापकरमिति सिद्ध्यति । समुद्रयानगमनमिति । यानपदं वाहनादितरणसाधनपरं ज्ञेयम् । गमन पदेनगतार्थतापत्तेः । तथा च समुद्रस्य तरणार्थं वाहनादिसाधनमाश्रित्य प्रयाणमिति फलति । बाह्वादिभिस्तरणस्य मनुष्यादिभिरशक्यत्वात् विशिष्य योग्यसाधनपरिगणनं कृतमिति भावः ।।

किञ्च – **अगारदाही गरदः कुण्डाशीसोमविक्रयी ।**
**समुद्रयायी वान्ताशी तैलिकः कूटकारकः ।**
**एतान् विगर्हिताचारान् आपाङ्क्तेयान् द्विजाधमान् ।**
**द्विजातिप्रवरोविद्वान् उभयत्र विवर्जयेत् ।**

**– अब्धि नौयानमीमांसा**

समुद्रयायी विगर्हिताचार इत्यभिहितः अपाङ्क्तेय इति च । उभयत्र = दैवे पैत्र्ये च । अगारदाही = गृहदाही । गरदः = विषं दत्वा परान् मारयतीत्यर्थः (शब्दकल्पद्रुम) कुण्डाशी = कुण्डं = योनिकुण्डं तदुपलक्षीकृत्य अशी = जीवनायात्रां यापयति । सोमविक्रयी = सोमो नाम रसः तस्य विक्रयकर्ता समुद्रयायी = समुद्रे प्रयाणकर्ता । वान्ताशी वमने निष्कृतं अश्नाति न । तैलकः = यन्त्रादिषु तिलमर्दनेन तैलं सम्पाद्य जीवनकर्ता। उक्तकर्मसु तारतम्यस्य सत्वेऽपि पापावहत्वं तु सिद्धम् ।।

अपि च सन्तीह बहुप्रमाणानि स्पष्टसमुद्रयाननिषेधपराणि –

**समुद्रयायी कृतहा रथ्यासमयभेदकः।**
**वेदनिन्दारतश्चैव देवनिन्दरतस्तथा ।**
**द्विजनिन्दारतश्चैव ते वर्ज्याः श्राद्धकर्मणि ।**

**– उशनसस्मृति–अ–४ –३३–३५**

**समुद्रगाः पतिताः**–(अब्धिनौयानमींमांसायां उदाहृतं)

**सकृत्समुद्रयाने हि प्रायश्चित्तमुदाहृतम् ।**
**बहुकालाध्यसने तु प्रायश्चित्तं च नैव हि ।**
**इमान्धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ।**
**समुद्रयात्रास्वीकारः कमण्डलु विदारणम् ।** – बृहन्नारदीये
**द्विजस्याब्धौ तु नौयातुः शोधितस्यापि सङ्गहः**
इति कलिवर्ज्यानाहुः । **आदित्यपुराणे –**
**कलौ तु पापबाहुल्यात् वर्जनीयानि मानवैः ।**
**विधवा पुनरुद्वाहः नौयात्रा तु समुद्रतः ।** – **नारायणस्मृतौ ७.२**
**विप्रादिष्वसवर्णजोद्वहमथो विप्रादिनौसंस्थितिम् ।**
(कालनिर्णये – कलिवर्ज्ये )
**द्विजस्याब्धौ तु निर्याणं** – इति – **अब्धिनौयानमीमांसा**

अत्र केचित् विलासार्थं समुद्रयानं निषिद्धम् । उत्तमोद्देशेन तत्वप्रचाराद्यर्थं च गमने तु न दोषः इति संकोचयन्ति । अनारभ्याधीतत्वात् अनभ्यनुज्ञातत्वाच्च विशेषस्य बीजाभावादयुक्तमेतत् । उद्देश्यविशेषपरतया सङ्कोचस्य सर्वत्र सम्भवात् अतिप्रसङ्गाच्च । शिष्टत्वेन प्रमितैः कैरपि प्राचीनैः उत्तमोद्देशं पुरस्कृत्य समुद्रयात्रादिना विदेशगमनस्याननुष्ठितत्वात् । आपवादिकप्रमाणानामपि अनुपलब्धत्वात् । अतः समुद्रयानं शास्त्रनिषिद्धमिति सिद्ध्यति । यद्यपि सन्ति तदभ्यनुज्ञापराः केचन निबन्धाः तथापि द्रव्यादि लोभेनाधुनिकैः रचिता इति अवश्यमुपेक्ष्याः ।

अत्रेदं अपि अवधेयम् ।

**मासं कारागृहे वासः नौभिर्यात्रा दिनत्रयम् ।**

**म्लेच्छावासस्तथा पक्षं यस्य स्यात् स तु पातकी'** —हेमाद्रि

इति दिनत्रयमविरतं समुद्रयाने पातकं उक्तमिति त्रिदिनन्यूनं समुद्रयानं न दोषायेति कैश्चिदूह्यते । समुद्रयानस्य समान्यतः पतनीयेषु गणनात् दिनत्रय तदधिकावधिसमुद्रसंयानं पापाधिक्यहेतुः । तन्न्यूनं तु अल्पपापकरं इति । तीर्थयात्रार्थं समुद्रसंयानं तु केवलहोराद्यवधिकमेवेति नैतद्विषयम् । एतेन रामेश्वर द्वारकायात्रासु किञ्चित् समुद्रप्रयाणे सत्यपि न दोषः । तीर्थयात्रार्थमपि दिनत्रयं यावत् समुद्रयानं निषिद्धमिति सेत्स्यति । अतः गङ्गासागरसङ्गमदर्शनार्थं दक्षिणतः समुद्रे प्रयाणं निषिद्धमित्येव सिद्धम् ।।

अथ वा नोदाहृतवाक्यं समुद्रनौयानविषयं किन्तु नद्यादिषु अपि दिनत्रयाद्यवधिकनैरन्तरनौयान निषेधपरमिति ।

तथा च **'तीर्थयात्रां विना गच्छन्'** इत्येतत् अत्र अपि अतिदिश्य तीर्थयात्रार्थं विना समुद्रयानसामान्यं दिनत्रयतदधिकावधिनद्यादिनौयानसामान्यं च निषिद्धमिति सिद्धम् । तीर्थयात्रां विना समुद्रयानं होराद्यवधि अपि निषिद्धं स्वरूपत एव । नदीनौयानं तु न स्वरूपतः निषिद्धम् । किन्तु दिनत्रयतदधिक-दिनावधिनिरन्तरनदीनौयानमेवेति भूस्पर्शं विना दिनत्रयपर्यन्तं नित्यकर्म-वर्जनप्रसङ्गोऽत्र निषिध्यते इत्यवगम्यते । मासं कारागृहावासस्य पक्षं म्लेच्छावासस्य निषेधे निमित्तान्तरं गवेषणीयम् । गमनस्यैव निषेधे अकर्मण्यत्वस्य हेतुत्वोक्तेः तादृशनिषिद्धम्लेच्छदेशविषयकत्वेऽस्य श्लोकस्य, दिनत्रयं नित्य-कर्माकरणे पातित्यवचनात् 'पक्ष' शब्दो निरर्थकः स्यात् । अत्रः अयं श्लोकः सालग्रामादिरहितस्य म्लेच्छावृततद्भूयिष्ठकर्मण्यदेश-वासपरो वा पुनःसंस्कारादि-प्रायश्चित्तानर्हताप्रयोजककालनिर्देशपरो वा वाच्यः। समभिव्याहृतकारागृहवासस्य एतज्जातीयकत्वात् ।

अथ समुद्रयात्रानिषेधस्य कलिवर्ज्यप्रकरणपठितत्वात् कृतादौ समुद्रयानं न निषिद्धमिति भाति । एवं **धर्माधिसारे** गर्भिणीपतिधर्मप्रस्तावे –

